# दिग्दर्शिनी



नीलाचलेन्द्रनिलयः पुरुषोत्तमोऽयं
कोणार्कमन्दिरपतिश्चजगत्प्रदीपः ।
स्वर्णाचलाधिपतिरेष च लिङ्गराजो
दिग्दर्शिनीं परममी परिपान्तु नित्यम् ॥

उत्कलसंस्कृतगवेषणासमाजस्य त्रैमासिकमुखपत्रम्

पुरी, उत्कलाः

सम्पादकः आचार्यव्रजकिशोरस्वाईं



सा संस्कृतिर्विश्ववारा - यजुर्वेदः, ७/१४

**संपादकः - आचार्यः डक्टरव्रजकिशोरस्वाईं**

जुन्-सेप्टेम्वर दिग्दर्शिनी २००७

ततः समुत्क्षिप्य धरां स्वदंष्ट्र्या
महावराहः स्फुट-पद्मलोचनः ।
रसातलादुत्पल-पत्र-सन्निभः
समुत्थितो नील इवाचलो महान् ॥
जलौघमग्ना सचराचरा धरा
विषाणकोट्याऽखिलविश्वमूर्त्तिना ।
समुद्धृता येन वराहरूपिणा ।
स मे स्वयंभूर्भगवान्प्रसीदतु ॥

**महाकविःबाणः**



वर्गीकरणं तदुत्पत्तिं तदुद्देश्यं तथा सामाजिकोपयोगितामनुपयोगिता च विमर्ष्टुं विद्वांस आकृष्टाः तदा विधानस्य व्यवसायं कुर्वाणो जनः एडवोकेटनाम्ना कथितः, एवं च सिद्धान्तज्ञानसंपन्नो जनः जूरिष्ट इति उच्यते स्मं । एवंरीत्या विधानस्य नियमः यस्य सिद्धान्तस्योपरि अवलम्बितः भवति तस्य अध्ययनं जूरिसप्रूडेन्सशब्दस्य द्वितीयार्थो जातः । अस्य तृतीयर्थोऽपि अस्ति यत् विधानस्य प्रकृतरूपं तस्य कार्यं (Nature and function of law) च । उदाहरणार्थमुच्यते यत् अस्माभिः कोऽपि अधिनियमः अथवा सामाजिकं विधानं स्वीक्रियतां नाम, तस्मिन् विषये विचारो भवेत् यत् अस्य विधानविशेषस्य निर्माणस्य प्रचलनस्य वा किं कारणं भवति इति । तर्हि एतादृशं विवेचनमस्मान् विधानस्य मूलाधारन्यायस्य यथार्थस्वरूपदिशा आकृषति । पुनश्च एवंप्रकारेण एतत् स्पष्टं भवति यत् येन क्रमेण सामाजिकन्यायस्य भावनायाः विशिष्टसामाजिकप्रदर्शने किञ्चित् उपक्रमणं सञ्जातमिति । एवंप्रकारेण, विधिशास्त्रेण सह राजनीतिः, अर्थशास्त्रं, समाजशास्त्रं, मनोविज्ञानशास्त्रं, नीतिशास्त्रं, भाषाशास्त्रं (Semantices) चेति शास्त्रैश्च सह अस्य स्पष्टःसंवन्धो भवति । एकोनविंशशताब्द्यां यदा पारम्परिकानुबन्धस्य अपरिवर्तितस्वतन्त्रतायाः युगमासीत्, एवं च इयं नीतिः न्यायपूर्णतया तथा च सामाजिक हितकारित्वेन मन्यते स्म, तदा इदानीन्तनभवननियन्त्रणविधानवत् यस्य आधारेण सर्वकारः भवन-स्वामिनं तदीयभाटकस्वामिनं च अन्तरा स्थित्वा भाटकमूल्यं दापयितुं भाटकगृहपरित्यागाय च प्रतिबन्धं सृजति इति । इदं कल्पनायाः बहिर्वस्तु आसीत् । किन्तु यतः सामाजिकभावनायाःपरिस्थितिः अस्मिन् विषये परिवर्तिता, एवं च मूलतः जनस्य भवन-सम्बन्धिकष्टमेव मुख्यं कारणं जातम्, अतः भिन्नप्रकारस्य नियमस्य प्रणयनप्रारम्भो जातः । यः उद्योगं कृषिं, व्यवसायमित्थं च सर्वं क्षेत्रं प्रभावयति स्म ।

१.३ एवं प्रकारेण दृश्यते यत् आङ्गलभाषायाः उपयुक्तास्त्रयोऽर्थाः भवन्ति । तत्र फ्रेञ्च भाषायामिदानीमपि जूरिसप्रूडेन्सशब्दस्य अर्थः किञ्चित् भिन्नः संकीर्णश्च दृश्यते । फ्रेञ्चभाषायां जूरिसप्रूडेन्सशब्दस्य अर्थो भवति धर्माधिकारस्य निर्णयः यस्य आङ्गलभाषायां विधि-क्षेत्रे Case-Law वा प्राङ्न्यायःउच्यते । स

नियामकनिर्णयकसंज्ञां लभते । अनेन प्रकारेण यत्र आङ्गलभाषायां चिन्तन-धारायाः आधारेण रोमराज्यात् आगतात् शब्दात् एकस्य शब्दस्य अर्थः निःसृतः । संप्रति युरोपीयभाषायाम् अस्य द्वितीयोऽर्थो विद्यते । किन्तु अस्य शब्दस्य अर्थः अत्र समाप्तो न भवति ।

१.४ इंगलण्ड, अष्ट्रेलिया, कानाडा-न्युजीलेण्ड, दक्षिणाफ्रिका-संयुक्तराज्यामेरीकादिषु देशेषु यत्र मातृभाषा आङ्गलभाषा तत्र अस्य शास्त्रस्य प्रतिपादकेषु स्पष्टविचारधाराद्वयं विद्यते । एकस्याः विचारधारायाः अनुसारं जूरिसप्रूडेन्सशब्दस्य अभीष्टं विधि-परिकल्पनायाः (Legal concepts) विश्लेषणमात्रम् । यत् अस्टिन् महाभागस्य विश्रुतग्रन्थस्य Province of Jurisprudence Determined विश्लेषण-पद्धतिहेतोः Analytical Jurisprudence विश्लेषणात्मकं विधिविज्ञानमुच्यते, तन्मध्ये तस्य कियन्तःशिष्याः एवं च अस्यां परम्परायां कियन्तः विधिशास्त्रिणः भवन्ति । एतस्मादृते एते लेखकाः विधानस्य तर्काणां मूलान्वेषणे रताः तिष्ठन्ति । एतेन तैः ज्ञातं यत् समाजः अस्य बाधकशक्तेः कुतो बाधकः ? एवं च अस्या बाधकशक्तेः परिसीमा केति ? एवंप्रकारेण विधिव्यवसायिनां कृते अयं दृष्टिकोणोऽमहत्वपूर्णो वर्तते । द्वितीयविचारधारायाः प्रवर्तकः शर्मण्यप्रसिद्धः दार्शनिकः काण्ट महाभागः तस्य विचारधारायां जूरिसप्रूडेन्सशब्दस्य उद्देश्यं भवति अस्य आदर्शविधिर्व्यवस्थायाः अन्वेषणम् । तच्च प्रत्यक्षतः अप्रत्यक्षतंश्च प्रत्येकव्यावहारिकविधिव्यवस्थाया मौलिकं रूपम् । किन्तु अस्य रूपस्य स्थिरीकरणे कयापि व्यावहारिकविधिव्यवस्थायसह कोऽपि विशेषसम्बन्धोनास्ति । वकलैण्डमहाभागेन तस्य विचारपूर्णग्रन्थेः Some reflection on Jurisprudence इत्यत्र अनेन प्रकारेण विचारःव्यक्तः । यथा -

१.५ (क) प्रथमतः ते भवन्ति ये विधानस्य तार्किकाधारेण आत्मनःसंम्बद्धं स्थापयन्ति । अस्य अन्वेषणस्य प्रयासेन संपृक्तिरावश्यकी । विधानस्य बाधकता अस्माकमुपरि किमर्थमस्ति तथा च विधानवाधकशक्तेः परिसीमा किमर्थम् कथितामस्ति यत् एतत् विधिज्ञानां वर्तते । यतोहि यदि विधानबाधकशक्तेः काचित् निश्चिता सीमा अस्ति तर्हि । प्रत्येकविधानज्ञातृभिरियं वेदितव्यां ।

एतस्या ऋते तैरेतदपि ज्ञातव्यं यत् अस्मिन् वर्गे कतिपयाः लेखकाः सन्ति येषामियं प्रकृतिः । एवं च इत्थं नियमो वर्तते यत् विधानस्य तार्किकाधारविषये तदीयविचारेण सह न मिलति ते एतादृशं विधानं न मानयन्ति । एतादृशं दृष्टिकोणं रक्षित्वा ते तस्य परिधौ आगच्छन्ति ।

१.६ (ख) ये काण्टमहाभागादिवत् कदाचित् व्यावहारिकशृंखलया स्वतन्त्रतया एकस्याः आदर्शनियमश्रृंखलायाः प्रतिपादनं कर्तुमिच्छन्ति । अस्यां श्रेण्यां ते लेखकाः समिलिता भवन्ति, ये नैसर्गिकनियमाधाररूपेण मानयित्वा एतद्विषयोपरि लिखन्ति । फलतःइयमन्तर्जातिकनीतिशास्त्रात् अधिकं किंचित् न भवति, एवं च द्वयम् एतत् कर्तव्यपर्यन्तं सीमितं तिष्ठति । इयमेकं संघटितं समाजं स्वसदस्योपरि स्थापयति । केन मनुष्येण किं करणीयं कस्यानुष्ठानाय स निश्चाप्यते इत्येतत् समानवस्तुद्वयं न स्यात् यत्र एतत्कथनं पर्याप्तं यत् एकया दृष्ट्या, यश्च प्रायेण साधारणो दृष्टिकोणः विधानसस्य मापदण्डस्यानुसारेण भवितव्यः । किञ्चित् विशेषविधानमेव भवेद् वा न, विधि-प्रकल्पनविज्ञानं प्रत्यक्षतः एतेन सह संयुक्तं वर्तते । वेन्थममहाभागेन स्वग्रन्थे नीतेः विधानस्य च विषयकसिद्धान्ते एतदालोचनात्मकविधिविज्ञानसंज्ञा प्रदता । सरलशब्देन एतत् विधानगतसमाधानमित्युच्यते । वेन्थमस्य तस्य अनुयायिनामनुसारमुपयोगितावादिनीतिशास्त्रमिति उच्यते, अस्योपरि, अयं प्रतिबन्ध आप्यते । अस्मिन् विषये कियत्पर्यन्तं समाजे अनिवार्यतया कार्यते इति निश्चीयते ।



## द्वितीयोऽध्यायः
# विधिशास्त्रस्य परिभाषा परिधिश्च

२.१. सर्वप्रथमतया एतत् निश्चेतव्यं यत् अस्यशास्त्रस्य परिभाषा का भवेदिति । एवं च अस्मिन प्रकरणे केषां विषयाणां समावेशो भवति इति ।

अस्मिन् विषये विचारे जाते अस्य विषयस्य ज्ञातारो विचारकाश्च ऐकमत्यं प्रकाशयेयुरिति न संभाव्यते । कस्मिन्नपिविषये अनेन प्रकारेण सर्वतोभावेन मतैकयं नैव दृश्यते । पुनश्च न्यायसिद्धान्तसदृशविषयोपरि अधिक पेक्षया अस्याः एकतायाः अभावः स्वाभाविकः । अस्य मूलकारणमेतदेव यत् अनादिकालादारभ्य मनुष्यस्य भावनाभिः बाह्याचरणैश्च सह न्यायस्य संबन्धस्तिष्ठति, बाह्याचरणस्यायं पक्षः मनुष्यस्य सामाजिकप्राणित्वात् द्वितीयेन सह सम्बद्धोऽस्तीति । एतेषु मनुष्यस्य नैसर्गिकस्वार्थपरतया अहंभावकारणात् च द्वितीयजनेनसह संघर्षस्य आशङ्का सततं वर्तते । अनेन हेतुना सामाजिक-जीवने उत्थान-पतनयोः छेदन-भेदनयोः बीजं निहितं वर्तते । अस्याःपरिस्थितेः रक्षार्थं मनुष्यस्य मनसि यः भावः उत्पद्यते एवं च यःसामान्यतः ऐकमत्येन मान्यः स्यात् स न्याय-भावनानाम्ना अभिधीयते । अयम् एकःसरलः समष्टि-बोधकशब्दश्च भवति । अयं मानव-समाजस्य संरक्षणे परिचालाने च सदैव क्रियाशीलस्तिष्ठति । सत्यंत्वेतदेव यत् यदा यदा अस्य भावस्य सत्ता तिष्ठति एवं च सोधारणव्यक्तेः चिन्तने अयं भावो विद्यमानस्तिष्ठति, तदा तदा समाजस्य चक्रं प्रशस्तेन मार्गेण चलति । यदा यदा अस्य ह्रासो जातः अथवा यया मात्रया अस्यह्रासो जातुः अस्यां मात्रायां समाजे वैषम्यं, विरोधः, उच्छृङ्खलता एवं च ऊहापाहौ अवर्धन्त । अयं भावो भारतीयविचारधारायां धर्मनाम्ना अभिधीयते ।.भगवद्गीतासु भगवता श्रीकृष्णेन एतदर्थम् अर्जुनमुद्बोधयितुमुक्तं यत् यदा-यदा धर्मस्य हानिः एवं चाधर्मस्य अभ्युदयः भवतिः, तदा तदा धर्मस्य संस्थापनाऽर्थं भगवान् स्वयं अवतारं गृहणीयात् उपर्युक्त विषयकथनस्य एको धार्मिको महत्वपूर्णो विन्दुर्वर्तते ।

२.२. यस्य अर्थः श्रद्धालूनां कृते एकः भवति एवं च सामाजिकविज्ञानोपरि आस्थां स्थापयितॄणामन्यः । किन्तु .अत्राय निर्विवादो यत् द्वयोः मूले एका समानता वर्तते । अत्र इतिहासस्येदमेव साक्ष्य यत् यस्मिन् कस्मिंश्चित् युगे भवतु, परन्तु अन्यायः अनीति र्वाबहुकालपर्यन्तं समाजे न चलितुं शक्नोति । यत्र एकस्याः परिमितायाः मात्रायाः अधिकः दुर्भावो वर्धते तत्र अयं समाजः छिन्नः भिन्नश्च भवति । पुनश्च नूतनसमाजस्य निर्माणं भवति । समाजस्य

संचालने यस्य भावस्य इयती प्रधानता तिष्ठति एवं च यस्य संबन्धः अन्तः बहिश्च द्वयोः प्रकारकयोः विचारैः आचरणैश्च सह तिष्ठति तस्मिन् विषये विस्तारः कियत्पर्यन्तं भवति तत्र सर्वे विचारकाः एकस्मिन् परिधौ तिष्ठन्तु इति न संभाव्यते । न्यायसिद्धान्तस्य सम्बन्धः अनेन भावेन विद्यते । तेन हेतुना अस्य व्याप्तिविषये यथेष्टमतभेदस्तिष्ठति ।

२.३ अस्मिन् प्रसङ्गे एतत् ध्येयं यत् एतत् शास्त्रं मूलतः एकं भौतिकशास्त्रं यथा नीतिशास्त्रम् । पार्थक्यं त्वेतदेव यत् यद्यपि नीतिशास्त्रन्याय-सिद्धान्तयोर्मध्ये न कोऽपि भेदो वर्तते तथापि नीतिशास्त्रस्य उपस्थापनं न्यायसिद्धान्तापेक्षया भिन्नम् अधिकव्यापकं च भवति । नीतिशास्त्रे ये विषयाःआगच्छन्ति ते सर्वे विषया न्यायविज्ञानाभ्यन्तरे न समागताः भवन्ति । यदि एवं स्यात् तर्हि.सामाजिकजीवने प्रतिक्षणं राजशासनमुत्थितदण्डं स्यात् । शान्तिः सामाजिक सहजीवनं च असंभवं भवेत् । उदाहरणार्थं मिथ्याभाषणं गृह्यते । यद्यपि अयमेको दुर्गुणः, यः असभ्यसमाजे सभ्यसमाजापेक्षया न्यूनतया प्रचलितः तथापि सभ्य-समाजे अस्य किञ्चित् अधिकमात्रया प्रचारादपि सद्विचाराणां प्रचारकैः चिन्तकैश्च अस्य भर्त्सना क्रियते । असत्यभाषणं कुर्वन्तो जनाः सर्वदा समाजेन सततं नीचदृष्टया दृश्यन्ते । कस्मिंश्चित् कस्मिंश्चित् देशे इयम तीवन्यकृत्वेन स्वीक्रियते । यथा भारतवर्षे इत्थमुच्यते यत् "नास्ति सत्यात्परोधर्म" । किन्तु अस्मिन् विषये अतिमिथ्या यावत्पर्यन्त मन्यस्य बृहदहितं न करोति अथवा तेन इत्थं कर्म न कृतं येन तस्य हानिःजाता । यः अस्य मिथ्य प्रयोगस्य आक्रान्तो न भूत्वा कदापि न कर्म कुर्यात् तावत्पर्यन्तं एतत् मिथ्या । विधानदृष्ट्या दण्डनीयं न बोध्यते । अतएव एतादृशमिथ्याचरणं नीतिशास्त्रदृष्ट्या गर्हितं भवति । इति ज्ञात्वापि न्यायविज्ञानस्य दृष्ट्या तत् नैव विवेचनीयम् । एतदर्थमेतत् दृश्यते यत् यद्यपि पूर्वदेशेषु यथा भारत, ञ्चीन, जापन, कोरिया-आरब-फ्रन्समिश्र तुर्किस्तानेषु केनापि रूपेण नीतिशास्त्रीयवचनानां प्रादुर्भावो जातः, तथापि एतत् शास्त्रं यत् जूरिसप्रूडेन्स न्याय-विज्ञानं वा कथ्यते तस्य कल्पना नैव भवितुमर्हति । तस्य उद्गमस्थानं यूनानदेशे प्लेटो - आरिस्टोटल-सक्रेटिस सदृशमनीषिणां चिन्तने दृष्टिगोचरं

भवेत् अनन्तरं यथा युनानी-विचारधारा यूरोपस्य एकस्मात् कोणात् अन्यकोणं यावत् एकस्मात् युगात् अन्यद्युगं प्रति प्रवहति तथा न्यायविज्ञान-संम्बन्धिनोऽनेके विचारा विकीर्णाः । कालक्रमेण इदं शास्त्रं विशेष रूपं धारयामास ।

२.४ किन्तु समाजस्योपरि न्याय-भावनायाः अप्रतिहतं शासनं तथाच तस्या गम्भीरता प्रतिष्ठिता । अस्मात् कारणात् अस्य विस्तारविषये एवं च फलस्वरूपतः अस्य परिभाषायाः विषयेऽपि समस्तविचारकाणां समानदृष्टिकोणो न तिष्ठति । केनचित् अस्मिन् विषये समाजवादिदृष्ट्या केनचित् दार्शनिकदृष्ट्या केनचित् ऐतिहासिकदृष्ट्या केनचित् विश्लेषणात्मकदृष्ट्या च अस्योपरि विचारः कृतः । एतदर्थम् अस्यः विचारणीयो विषयोऽपि एतदनुरूप स्यात् । अपिच अस्य परिणामोप्ययं जातः यत् एकस्याः विचारसरण्याः प्रत्येकः वैयक्तिकः संस्थापकः तथा च तेषां कृतित्वम् अन्यस्मात् किंचित् प्रकारकं भिन्नमनुभूयते तत्र प्रतिपाद्यविषयोऽपि एकस्मात् अन्यः स्वतन्त्रो दृश्यते । अतः यदि अस्य विभिन्नतोपरि विचारःक्रियते तर्हि एकस्याःसर्वसम्मतायाः परिभाषायाःस्थिरीकरणं कष्टकरं भवेत् किन्तु सर्वेषु एकः समानो भावोऽपि सक्रियस्तिष्ठति अयं भवति न्यायस्य आदर्शः । अस्य मौलिकाधारा एवं च समाजस्य उपरि अस्य प्रभावः इति । अनया दृष्ट्या अयं निष्कर्षः आगतः यत् न्यायविज्ञानमेतत् शास्त्रं भवति यत्र विवेच्यविषयः पृथक् भवति । ऩीतेः अंशस्य समाज-संचालने प्रधानता हीयते येन अस्य परिपालनं प्रत्येकस्य नागरिकस्य कृते अनिवार्यं भवति । यस्य उल्लंघनं समाजस्य प्रभुत्वसंपन्नक्षमतया दण्डनीयं बोध्यते ।

२.५ यदि विधि-विज्ञानोपरि दार्शनिकदृष्ट्या विचारं कुर्वन्ति ते तर्हि समस्ताः चिन्तकाः निजस्व-विशिष्ट-शब्दावल्यां न्यूनाः तिष्ठेयुः । तेषामेकं मौलिकं समाधानं भवति, पुरातनयुगात् आगतानां समस्तानां नूतनत्वप्रतिपादनमात्रं न स्यात् तर्हि संप्रति विभिन्नविधानसिद्धान्तानां मेलनं संपदयतां विन्दूनां किञ्चिदधिकतया परिस्कारो भवति । एतेनापि स्पष्टं स्यात् यत् इदानीन्तनविभिन्न न्याय-सिद्धान्ताधारोपरि एका समानभावना कार्यं करोति । यस्यां बीजं यूनानस्य राजनीतिक दार्शनिकानां चिन्तनेऽपि प्रत्यक्ष-रूपेण दृष्टिगोचरं भवेत् ।

२.६ उपर्युक्त-विवेचनेन एतत् स्पष्टं भवति यत् न्याय-विज्ञानस्य भावनानां

दृश्यविकाशात् पूर्वं समाजे कतिपयनैतिकमूल्यानां मान्यतानां च प्रचलनम् अत्यन्तमावश्यकम् । यतोहि यत्र सामाजिकरूपेण व्यक्तिव्यक्तं चान्तरा कस्यचन एतादृशस्य आदर्शस्य प्रादुर्भावो न भवतु यत्र एकेन अन्यस्य सौकर्यासौकर्ययोः बोधो भवेत् । अयं शारीरिको भवतु मानसिको वा । तत्र न्यायस्य तादृश सिद्धान्तानां प्रजननमपि अकल्पनीयं भवति । अयं विधानस्य मूलाधारो भवति ।

विधानस्य मूले समाजस्य शक्तेः व्यक्तेः उपरि एतत् शासनं भवति यत् समाजसम्मतादर्शात् आचरणप्रतिबन्धं पातयति । यदि समाजे इयं भावना बद्धमूला नभवेत् या समयस्य परिवर्तने एवं च भिन्न-भिन्नपरिस्थितौ समाजस्य सामूहिकहिताय उपयुक्तं नैव बोध्यते तावत्पर्यन्तं, समाजस्य शासनशक्तेः प्रयोगः तस्य संरक्षणे नैव संबध्यते । यथा, चौर्यविषयः अनुचितोपायेन अन्यस्य धनापहरणं चोपजीव्य विचारेः । इदानीं प्रत्येकसभ्य-देशस्य दण्ड-विधाने स्तेयस्य गणना अपराधरूपेण भवति । तस्य गुरुत्वेन क्रमानुसारं दण्डव्यवस्था आसीत् । एवं प्रकारेण अन्यस्य शारीरिक आघातोऽपि विचार्यते । अधुना यदि समाजद्वारा अयं निषिद्धः, अपि चास्य निषेधस्य अतिक्रमणमपराधरूपेण बोध्यते तर्हि एतत् स्वीकर्तव्यं यत् अस्याः स्थितेः उत्पत्तेः प्राक् समाजस्य लोकमतेन अयं गृर्हणीयत्वेन बोध्यते । उत्पीडितेन समाजस्य समक्षं स्वकष्टमुपस्थाप्येत एवं च समाजस्य सद्भावना तं प्रति प्रकाश्यते । अतएव यत् कार्यंव्यक्तिः स्वबलमाध्यमेन न कर्तुंशक्नोति तत् समाजस्य निजस्वसंघटितबलेन संम्पादयति । दोषिणे उत्पीडकाय च दण्डं प्रदाय दण्डभयं दर्शयित्वा अस्याः घटनायाः पुनरावृत्तेः विरोधनाय चेष्टते किन्तु निरोधस्य भावनया यद्रूपं गृह्यते ततः पूर्वं समाजे अयं नैतिकादर्शः स्थापितो भवति यत् सबलस्य दुर्बलोपरि शरीरबलेन उत्पीडनमनुचितम् । एतत् नीतिशास्त्रस्य एकमंगम् । पुनश्च अनया नीति-भावनया विधानस्य रूपं गृहीतम् । एवं च दण्ड-व्यवस्थया समाजस्य सफलतया सुव्यवस्थितया संचालनाय नूतनपदक्षेपः कृतः । अतः एतत् स्पष्टं यत् अद्यः यत् Law वा विधानमिति कथ्यते तत् प्राक् समाजे नीतेःनियमरूपेण चलति, एवं च तदा विधानव्यवस्था अरब्धा । सत्यं त्वेतत् ।

२.७ अद्यापि यदा विधानं प्रगतिशीलं परिवर्तनशीलं वा कथ्यते तदा तत्पश्चात् अपि समाजस्य मनोवृत्तिः मूलं भवति । विधानस्य तदा प्रादुर्भावो भवति यथा कश्चन नूतनो विचारः कस्यचन वर्तमानस्य अनिष्टस्य निवारणाय प्रवृतिं जनमते संचालकानानुत्पादयति । अपिच तदा किंचित् समयानन्तरमयं भावः विधानस्य रूपं गृह्णाति इति । अतएव, विधिशास्त्रात् प्राक् नीतिशास्त्रस्य उत्पत्ति भवति, परन्तु ऐतिहासिकदृष्टिकोणतः विचारं कुर्वन्ति केचन एतादृशाः विधिशास्त्रिणः, येषां मतेन एतत् निराधारं यत् विधानस्य उद्‌गमात् आचाराणात् प्राक् नीतेः भावनायाः समाजे उदयो जातः । तस्य सम्मत्या नीतेर्भावना तदा आगता, यदा समाजस्य सवोच्चशक्त्या किंचित् औचित्यमादेशश्च प्रारब्धः । यस्य अवज्ञया दण्डभयमुत्पन्नम् । एवं प्रकारेण विधानगतबाधस्य बलकौन्द्रिकभावनायाः प्रचारानन्तरं नीतेः भावना उत्पन्न । अयं विषयो मेने-एलेनप्रभृतयो लेखकाः पतिपादितवन्तः ।



## तृतीयोऽध्यायः

## नीतिशास्त्रविधिशास्त्रयोः पारस्परिकसम्बन्धः

३.१. नीतिशास्त्रं मनुष्यम् एकं बुद्धिमन्तं विवेकसंपन्नम् उचितानुचितसद्सद्विभेदज्ञानसम्पन्न प्राणित्वेन बोधयति । राज्य-विधानं मनुष्यं कदाचित् भिन्नदृष्टया पश्यति । एतदर्थं मनुष्यः एकः अधिकारकर्तव्ययुक्तः प्राणी भवति । विधानेन निर्दिष्टस्य स्वीकृतस्य च कार्यस्य अवहेलया तस्य अहितं भवति, तस्य कृते यो दण्डो भवति तदर्थं स आत्मानं समर्पयति विधानं व्यनक्ति बाह्याचरणात् नियमयति । यदि काचित् व्यक्तिः नीतेः नियमस्य वा उल्लंघनं कुर्यात् तर्हि सा अधिकात् अधिकतया समाजे निन्दायाः कुत्सायाः वा भाजनं भवेत् । किन्तु अधिकप्रत्यक्षतया वा स्पष्टरूपेण तस्याः काचित् हानि र्न

भवति । कस्मिंश्चित् विशेषसमाजे किंश्चित् वस्तु मर्यादितम् अमर्यादितं वा स्यात् इत्ययमेकः अनिश्चितः आदर्शः भवति यः कालेन भौगोलिकावस्थया च परिवर्तितुमर्हति । अतएव नीतिशास्त्रे यः एव मान्यः सिद्धान्तो भवति तस्य किश्चित् शाश्वतं स्थिरं वा रूपं नास्ति । तस्य मान्यतां मूल्यं च राज्यसत्ता महत्वेन मानयति । तस्य पालनमुल्लंघनं वा विधानस्य अन्तर्गतं भवति तेन राज्यं शासितं भवति । तद् विधानं नियमत्वेन परिगणितं भवति । उदाहरणत्वेन नीतिशास्त्रस्य एकं वचनमुच्यते यत् "सदा सत्यं कथितव्यम्" इति । "असत्यभाषणं पापं भवति" इति । किन्तु अद्यावधि असत्यभाषणं राष्ट्रियविधितः वर्जितं न कृतम् । अतएव यदि कश्चन सत्यवादी भवति तर्हि स समाजे साधारणतः आदरस्य स्थानं प्राप्नोति । किन्तु विपरीतत्वेन मिथ्या-भाषणनिमित्तं कस्य कृते दण्डप्रदानं न भवति । यदि कश्चन आजीवनं मिथ्या वदति तर्हि तदर्थं राज्यं तस्मै कारावासम् अन्यप्रकारकं दण्डं वा न दास्यति । इतः किंचित् अग्रतःगत्वा यदि पश्यामः यत् यदि कश्चन मिथ्या-भाषणं कृत्वा प्रवचनया वा कस्यचन विश्वासमुत्पादयति यत् यद् वस्तु स तेन विक्रेतुमिच्छति तत्र घोषविक्रयः स्यात् एवं च अस्य किश्चित् निश्चितं मूल्यं वर्तते । अत्र तस्य कथनोपरि विश्वासः करणीयः इति मत्वा द्वितीयः कश्चन् तस्मात् क्रीणाति अनन्तरं तत्र सत्यता ज्ञाता, तदानीं तस्य अधिकारः आगच्छत् यत् तत्र वञ्चकोपरि उपराधमारोप्य न्यायलयेन कारावासः अन्यप्रकारकः दण्डो वा विधातव्यः इति । अथवा सर्वोच्चधर्माधिकरणे वञ्चकस्य विरोधे वादपत्रम् उपस्थाप्य अस्योपरि न्यायालयेन एकस्य निश्चितस्य राशेः आदानाय निर्देशः प्राप्तव्यः । अन्यदेकम् उदाहरणं गृह्यताम् । यत् - नीतिशास्त्रस्य वचनं भवति दीनानां दुःखिनां सहायताप्रदानं प्रत्यकमनुष्यस्य धर्मः कर्तव्यं वा । एतादृशेन कर्मणा महतः पुण्यस्य प्राप्ति र्भवति । अस्य कार्यस्य सम्पादकः मनुष्यः सदैव समाजे श्रद्धायाः आदरस्य च अधिकारी भवति । किन्तु मन्यतां कस्यचन जनस्य सम्मुखस्थमार्गोपरि एकः क्षुधा-तृषार्तदुःखी मनुष्यः अन्नः-जलग्रहणनिमित्तं निवेदयति । किन्तु गृहस्वामी तं दृष्ट्वा, तस्य वचः श्रुत्वाऽपि पाषाणवत् कठोरो भूत्वा उपविशति, पश्चात् कश्चन अधिकविचारसंपन्नो जनः आगतवान् एवं च

दुःखिने मनुष्याय साहाय्यमकरोत् । अत्र नीतिशास्त्रं प्रथमश्रेणिकस्य जनस्य, निन्दां कुर्यात् एवं च द्वितीयश्रेणिकजनस्य समर्थनं कुर्यात् । किन्तु अद्यत्वे प्रायेण प्रत्येकदेशस्य विधिः अस्मिन् विषये मौनमवलम्बते । स प्रथमश्रेणिकस्य जनस्य न निन्दां कुर्यात् न च तस्मै दण्डं दद्यात् । पुनश्च द्वितीयश्रेणिकस्य जनश्च प्रशंसायां न्यायालयः कश्चन घोषणात्मकं निर्णयं दद्यात् । किन्तु मन्यतां कश्चन मनुष्यः कस्यचन जनस्य द्वारि मूर्छितावस्थायां पतितः, एवं च तस्य पेटिकायां किञ्चित् अतिमूल्यार्हवस्तु वर्तते । तस्य असहायावस्थां दृष्ट्वा कश्चन जनः तस्य पेटिकातः मुद्रां बहुमूल्यवस्तु च उन्मोच्य गृहीतवान् । विधिः एतत् चोर्यत्वेन अपहरणत्वेन न मन्यते । एतत् कार्यनिमित्तं दण्ड-विधाने दण्डस्य व्यवस्था वर्तते । अतएव एको भवति नीतिशास्त्रविषयः एवं च द्वितीये भवति न्याय-सिद्धान्तस्य विषयः । एतादृशयोः भेदयोः प्रदर्शयितृणाम् अगणितानि उदाहरणानि सन्ति । सत्यं त्वेतदेव यत् न्यायविधानात् पूर्वं नीतिविधानस्य Rule of morality इत्यस्य भावः समाजे उद्भूतः तत्रत्यनियमेषु समाजस्य अस्वीकृतिः स्वीकृतिर्वा अवगता । तयोः राजस्य एका विशेषश्रेणी आनीता या विधानसंज्ञयाः अभिहिता तस्याः परिपालनमनिवार्यंजातम्, तस्य उल्लंघनं दण्डनीयत्वेन प्रतिपन्नम् । स दण्डः न्यायालयेन भवतु अथवा व्यवहाराधिकरणेन सामाजिकविचारालयेन वा भवतु ।

**इतिहासस्य पृष्ठभूमिः**

३.२ यदि इतिहासस्य सुदीर्घविस्तृतपृष्ठभूमौ अस्य सिद्धान्तस्य वीक्षणं क्रियेत तर्हि एतदेव स्पष्टं दृश्यते यत् विधौ परिवर्तनात् प्राक् समाजस्य दृष्टिकोणे भेदः उत्पद्यते । एतत् परिवर्तनं यत्र एकं निश्चितं लोकमतं भवति तत्र तस्मिन् लोकमते दृश्यते यत् यत्र अधिकारः कस्यचन व्यक्ति-विशेषस्य वर्गविशेषस्य वा हस्ते तिष्ठति तत्र व्यक्तेः वर्गविशेषस्य दृष्टिकोणे प्रथमतः परिलक्षितः भवति । ततः परं विधान-मालायां तत् प्रविशति । एतदर्थमेतत् कथितं यत् कस्यचन देशस्य इतिहासः तस्य देशस्य सामाजिकरुचेः तस्य परिवर्तितपटलस्यापि दर्पणस्वरूपं भवति । उदाहरणार्थं यूनानस्य रोमस्य वा इतिहासो गृह्यताम् । तस्मात् ज्ञायते यत्-अस्मिन् समाजे दासप्रथा प्रचलिता आसीत् । एतदर्थं

दास-वृत्तेः दासानां जीवनस्य सम्बन्धे विधाने विस्तृतरूपेण व्यवस्था कृता । अनेन प्रकारेण मध्ययुगे यथा सामन्तवादिशासनमासीत् अनेन प्रकारेण मध्ययुगे तथा भिन्न-भिन्न प्रकारकविधानानि प्रस्तुतानि, यैः सामन्तानां तत्संबद्धप्रजानां मिथो नियमनं सञ्जातम् । पुनश्च यदा रोमीयकैथिलिकं प्रोटेस्टेण्डसम्प्रदायं च अन्तरा जातो मतभेदो ईसाई-धर्मे उग्ररूपं दधार इंलैण्ड, फ्रांस, स्पेन, पर्तुगाल, शर्मण्य इति प्रभृतिषु देशेषु एतद् विधानं प्रवर्तितं, येन तत्कालीनशासकैः स्वीकृतसम्प्रदायादेशस्य आधारे कस्यचन एकस्य पक्षस्य, विपक्षस्य वा विधानं प्रणीतम् । एतादृशं राज्यं यत् धर्मसापेक्षराज्यं Theocratic State कथितम्, तत्रत्यविधानस्य आधारेण तदानीन्तनसमाजस्य शासक-वर्गस्य वा मानसिक चिन्तनं कार्यं कृतम्, एकोनविंशशताब्द्यां यथा औद्योगिकी क्रान्ति रभवत् । सामन्तवादस्य समाप्तिर्जाता, नूतन-नूतनयन्त्रं प्रवर्तितं श्रमिकानां महती आवश्यकता अभवत् । तदा तस्मिन् विषये भिन्न-भिन्नप्रकारकी समस्या उत्पन्ना, विधानस्य धारा द्वितीयेन मार्गेण प्रवाहिता । अद्यत्वे उदारवादिनां, साम्यवादिनां सामाजिकानां प्रणालीनां मध्ये मौलिको मतभेदः उत्पन्नः, तदीयविधानेषु विधिसिद्धान्तेषु च भेदः क्रमेण परिदृष्टः । इंलण्डदेशस्य प्रसिद्धसंविधान-विमर्शकेन ए.वी डाइसीमहाभागेन निजस्वप्रसिद्धे ग्रन्थे (Law and Public Opinion in English and in the 19th century) विस्तृतरूपेण विचारः कृतः, एवं च न्यायविवेचकेन फ्रोडमैनमहाभागेन तथा इंलैण्डस्य प्रसिद्धेन न्यायाधीशेन डेनिंगमहाशयेन यः एतदुपरि यथेष्टो विचारः कृतः । प्रथमतः निजस्वग्रन्थः Law and Social change तथा Law and Social change in contemporary Britain नामके ग्रन्थेऽस्मिन् विषये विचारः कृतः, तथाच डेनिंगमहाभागेन Changing Law नामके ग्रन्थे अस्य विश्लेषणं कृतम् । अनेन प्रकारेण हैजर्ड (Hazard) महाभागेन स्वीये ग्रन्थे (Law and social change in U.S.S.R) एवं च जिन्सवर्गमौरिसमहोदयेन Law and public opinion in England in the 20th century इति नामके ग्रन्थे डाइसीमहाभागस्य उपर्युक्तग्रन्थोद्देश्येन विंशशताब्दीपर्यन्तं तथ्यं स्पष्टं कृतम् ।

**नीतियो विधानर्मध्ये मतभेदस्य संबन्धः**

३.३ किन्तु एतदत्र मनसि रक्षितव्यं यत् भारतवर्षमेव समस्ते विश्वे इत्थमेको देशो यत्र नीतिं विधानं चान्तरा कश्चन स्पष्टो भेदः न प्रदर्शितः । अस्य कारणं द्विविधम् । एकं त्वेतत् यत् येन रूपेणं अन्येषु देशेषु विधानस्य विशिष्टा व्यंवस्था समाजे प्रचलितासिद्धान्तस्य एकस्मिन् कठोरावरणे आछाद्य संस्थापिता, भारते एवं नैव जातम् । अत्र नीतिं विधानं चान्तरा कश्चन प्रकारभेदो न कृतः । राज्यार्थं जष्टीनीय संहितावत् कापि संहिता न प्रणीता, यतोहि समाजः काभ्यां विधिनिषेधाभ्यां परिचालितः, तस्य भारः निस्पृहविचारकस्य हस्ते समर्पितः, एवं च एषां नियमानां निर्धारिणमपि तेषाहस्ते स्थापितम् । अतएव अस्माकं प्राचीनसमाजे या वा रचना अभवत् सा मनु-याज्ञवलक्य-हारीत-विष्णु-पराशरादीनां स्मृतयः संहिताश्च । एतेषां ग्रन्थानामध्ययनेन एतद् ज्ञायते यत् अत्र शुद्धविधानार्थकं वचनं प्रचुरं नास्ति । अत्र नीतिविधानं चान्तरा काचित् स्पष्टतया वा पृथुला रेखा नास्ति । एतत् एकमित्थं दृष्टिकोणत्वेन प्रतिभाति यत् तत् कदाचित् अद्यतनविधिशास्त्रविदः समस्यायां निक्षिपति । तस्मादेतत् ज्ञायते यत् ग्रीसवत् विशेषेण रोमवत् स्पष्टरेखाचित्रितः विशिष्टसीमा बद्धविधानग्रन्थो नास्ति । एतेनायं निष्कर्षो निष्कासितो भवति यत् भारतीयबुद्ध्या विधानस्य स्पष्टज्ञानं नैव प्राप्तम् । अत्रत्यं चिन्तनम् अध्यात्मेन नीत्या च परिणतं तिष्ठति । विश्लेषणेन विधानस्य शुद्धं रूपमत्र न प्राप्तम् ।

**भारतीयदृष्टिकोण माध्यमेन सामाजिकमाचरणम्**

३.४ किन्तु सत्यमस्मात् किंचित् भिन्नं भवति । भारतीयदृष्टिकोणेन जीवनम् एकम् अविभाज्य रूपेण दृष्टम् । नीतितो भिन्नं सामाजिकमाचरणं भारतीयविचारकैः असंगतदृष्ट्या विचारितम् । एतदर्थं भारतीयमनीषिणां कृते एकः एव पर्याप्तः शब्दः आसीत् स एव धर्मः । धर्मस्य मूलभवति ऋतं सत्यं च । विधानस्य एतत् भवति आधारः । एतदर्थं धर्मशास्त्रेषु निहितं विधानं किंचित् नीतिःएवं च अद्यावधि प्रचलितो Law इति शब्दः । एतयोः द्वयोः सम्मिश्रणेन संबद्धं केषुचित्अंशेषु विशुद्धविधानरूपं च वर्तमानं ज्ञायते । किन्तु अस्य विपरीतत्वेन अद्यत्वे यद् अस्माभिः अर्थशास्त्रं कथ्यते, यत् प्राचीनसाहित्ये

प्रमुखं स्थानं लब्ध्वा कौटिल्येन रचितम् अर्थशास्त्रम् उच्यते । अत्र कश्चन अध्यायो विधानरूपेण वर्तते । यथा - तृतीयमधिकरणं धर्मस्थीयविषयकम् चतुर्थं च करविषयकं विशुद्धविधानं भवति । ग्रन्थकारस्य लेखनशैल्या एतत् ज्ञायते यत् एषां विधिनियमानां पालनम् उल्लंघनं च एकस्याः विशेषव्यवस्थायाः अन्तर्गतं भवति । एवं च विशिष्टप्रकारकस्य दण्डस्य स्पष्टउल्लेखोऽत्र लभ्यते । अतएव भारतीयविधानं राजशासनेन कदापि निर्णीतं न भवति, वरं संहिताकारैः । राज्यशक्तिः अस्य आधारेण समाजे शान्तिव्यवस्थां प्रचलितां रक्षति ।

**विधिशास्त्रस्य परिभाषा**

३.५ विधिशास्त्रस्य परिभाषा पाश्चात्ये पौरस्त्ये च भूखण्डे तत्रत्यविधिशास्त्रिणां मतानुसारेण प्रायशः एकस्मिन् परिणामे प्रतिपद्यते । विधिशास्त्रं तत्रत्यसिद्धान्तैः सह आत्मानं सम्बध्नाति । समस्तप्रकारक राज्यविधानानां मूले एतद् व्रर्तते । अस्य अयमर्थो नकदापि भवति यत् विधिशास्त्रे एतादृशप्रकारकः सिद्धान्तः प्राप्यते योऽस्माभिः प्रत्यकदेशस्य विधाने विधिप्रणाल्यां वा अविकलतया प्रवर्तयितुं शक्यते । कासुचित् घटनासु समाज-संघटनस्य मूलसिद्धान्तानां विचारस्य हेतोः विधानस्य स्वरूपं तत्संचालनाय सूक्ष्मतत्त्वमपि परस्परं भिन्नं प्रदर्श्यते । यथा इदानीं ये गणतन्त्रवादित्वेन प्रजातन्त्रवादिदेशत्वेन वा कथ्यन्ते । यत्र धनवादमाधृत्य समाजस्य आर्थिकव्यवस्था प्रचलिता भवति, तत्र पारस्परिकानुबन्धस्वातन्त्र्य (Freedom of contract) स्य प्रचलनं भवति एवं च विधानस्य आधारोऽपि व्यवहारे इत्थं भवति । तत्र विधानं समाज-सम्मतं भवतु अथवा विधान-सभाद्वारा गृहीतं भवतु (Statute-law) । किन्तु यो देशः समान्यवादिप्रथाम् अंगीकरोति, यत्र प्रजा-जीवनस्य भिन्ने-भिन्ने स्तरे राजस्य नियन्त्रणं, नियमनम् अंकुशो वा वर्तते, तत्र आनुबान्धिकस्वातन्त्र्यस्य आकांक्षा अधिकतया नास्ति । किन्तु एतेन एकोऽन्यस्मात् पृथक् भवति । एतेन समाजसंघटनमपि भवति । अत्र समुचितविश्लेषणेन केचन इत्थं नियमाः दृष्टिगोचरा भवन्ति ये उभयत्र समानाः स्युः । उदाहरणरूपेण संयुक्तराज्यम् आमेरिका, इंलैण्ड, फ्रानस्, भारतं च यत्र यत् विधानं प्रणीयते तस्य मूले एको विशिष्टो न्यायसिद्धान्तो वर्तते यः

प्रत्यकव्यक्ति प्रति प्रणीयते एवं च सुशासनम् अथवा विधानस्य शासनं कथ्यते। येन प्रत्यकव्यक्तिः अनिवार्यतया माननीया भवति। अनेन प्रकारेण समाजे व्यक्तेः उग्रप्रतियोगिताभावनायाः उपशमनार्थमपि च स्वदृष्टया देशस्यकृते सुखस्वाच्छन्द्यप्रदानाय यो राज्यसम्मतो नियमो भवति। तस्याधारेण एवं च प्रथमश्रेणिक देशानां विन्द्वाधारेण किंचित् सामान्यनियमः परस्परं मिश्रितरूपेण दृश्यते। एतेषां नियमानां संकलनम् अध्ययनं वर्गीकरणं च विधिशास्त्रस्य नियमो भवति।

**विधिशास्त्रस्य परिस्थितेः भिन्नता**

३.६ द्वितीयतः इदमेव वक्तुं शक्यते यत् विधिशास्त्रिभिः अयं मूलसिद्धान्तः स्वपरिस्थितेः अनुभवस्य तथा देशकालयोः विचारेण भिन्नभिन्नरूपेण प्रकाश्यते। एतदभिन्नताहेतोः तदीयपरिभाषासु आन्तर्यं दृश्यते। इतिहासस्योपरि दृष्टिपातेन ज्ञायते यत् प्राचीनकाले न पूर्वस्मिन् अपितु पश्चिमगोलार्द्धेऽपि विधानस्य विकाशक्षेत्रे विधिशास्त्रस्य सम्यग् विकाशो न जातः। रोम-साम्राज्येन विधानस्य एकं विस्तृतं मण्डलं सृष्टम्, एवं च अतिसूक्ष्मरूपेण समाजस्य विभिन्नावस्थानं नागरिकाणां पारस्परिकसंबन्धानाम् आधारेण तन्नियत्रणाय विधानं प्रणीतं किन्तु सिद्धान्तस्य सम्यक् विश्लेषणात्मिका विवेचना न जाता।

**रोमे विधिशास्त्रस्य विभिन्न शास्त्रैः सह सम्मेलनम्**

३.७ किन्तु, तथापि एतत् स्वीकर्तुं शक्येत यत् रोमदेशे विधितत्त्वस्य विमर्शोऽनेन प्रकारेण प्रारब्धः। एतत्कथनम् अनुचितं न भवति यत्र रोमदेशेन विधिसिद्धान्तं विधिनिर्माणमनु काचित् भावनाऽऽसीत्, तस्याश्च विकाशो जातः। प्रसिद्धो रोमदार्शनिकः, ऐतिहासिकः तथा विधिवेत्ता श्रीसिसिरोमहाभागः एतत् शास्त्रं ज्योतिषशास्त्रेण, ज्यामितिशास्त्रेण, तर्कशास्त्रेण च सह स्थापयति स्म यस्य उद्देश्यं भवति सत्यस्य अनुसन्धानमिति। यदिवा विधितत्त्वरूपेण संप्रति यूरोपे प्रचलित शब्दः Jurisprudence इत्यस्य निर्माणं रोमदेशजातं, किन्तु अस्य शब्दस्य अर्थः आसीत् विधानस्य ज्ञानम्। प्रसिद्धविधिशास्त्रिणा होलाण्डमहाभागेन विषयेऽस्मिन् अयं विचारः प्रकटितः।

## विधिशास्त्रस्य पर्यायद्वयम्

३.८ अनेन प्रकारेण उल्पियनस्य इयं सुपरिचिता परिभाषा प्रस्तुता यदनुसारेण एतत् शास्त्रं मानवीयं तथा दैविकं च जातम् । एतद्द्विप्रकारकज्ञानस्य तदा न्यायोचितस्य एवं च अन्यायपूर्णस्य विवेचनात्मकविज्ञानस्य पर्यायवाचिशब्दत्वेन अस्य स्वीकारो जातः । विधि-विज्ञानं दर्शनशास्त्रस्य अङ्गरूपेण स्वीकृतम् । विधानस्य अध्ययनीयोदात्तीकरणेन सह स्वभावतः अस्य अध्ययनाध्यापने कुर्वतां समानुपातिकरूपेण प्रतिष्ठा वर्धिता भवति । उल्पियनेनं आत्मार्थं स्ववर्गस्य जनस्य निमित्तं च एतत् कथ्यते यत् ते न्यायवादिनामुत्प्रेरकाः एवं च दर्शनशास्त्रस्य अध्ययने संलग्नाः । यत् परमार्थतः दर्शनशास्त्रमेव भवति न किञ्चिदव्यवस्थितमिति । सत्यं तु एतदेव यत्, उल्पियनस्य समयपर्यन्तं विधानीयसिद्धान्तस्य स्वरूपं प्रायेण परिचितं जातं, यस्य अस्तित्वं कस्यचन देश-विशेषस्य संस्थानोपरि वर्तते ।

## एकोनविंशशताब्द्यां नूतनकार्यकलाप

३.९ एकोनविंशशताब्द्याम् अस्मिन् मार्गे एकः नूतनः पदक्षेप उपस्थापितः । औद्योगिकी क्रान्तिः, यस्या प्रारम्भः इंलण्डे अभूत् एवं च या क्रमशः यूरोपे विभिन्नदेशेषु प्रविष्टा, तस्मात् कारणात् श्रमनियोक्तृणां स्वामिनां श्रमिकाणाम् आर्थिकसंबन्धं सुनियोजितं कर्तुं विशेषप्रकारकाणां सिद्धान्तानामावश्यकता जाता, यथा श्रमिकः स्वीयसामन्त (Fedual Lords) प्रभूणां सन्दंसात् आगत्य नूतनसमाज-प्रणाल्याम् अन्तर्भूतः । एतत् कार्यं सर्वप्रथमतया इंगलण्डदेशस्य प्रसिद्धविचारकेण जेरेमीवेन्थममहाभागेन कृतम् । येन विधानस्य एकं दर्शनं संघटितम्, यत् Utilitarianism वा । अनेन प्रकारेण एकोनविंशशताब्द्यामद्यावधि विधिशास्त्रं यथा प्रचलितं वेन्थममहाभागः अस्य जन्मदाता भवति, एवं च शर्मण्यफ्रांसप्रभृति देशेषु अन्यान्यविचारक पेक्षया मननं चिन्तनं च कृत्वा भिन्न-भिन्नग्रन्थानां रचना जाता, तेषां परिश्रमेण एवं च अध्यवसायेन च इदानीं विंशशताब्द्याम् अस्मिन् विषये एकं विशालसाहित्यं सृष्टं, यत् यूरोपे विविन्नभाषासु सम्पुटितं प्राप्यते ।

**विधिशास्त्रस्य परिभाषा**

३.१० उपयुक्तान् सिद्धान्तान् आधृत्य विधिशास्त्रस्य परिभाषाः प्रस्तुताः । कदाचित् कस्यचन विशेषविज्ञानस्य नियमाथमयं शब्दः प्रयुज्यते । यथा Medical Jurisprudence वा चिकित्सा-विधिशास्त्रम् । साधारणतः एतत् शास्त्रं शरीर-विज्ञानस्य नियमानां संकलनमेव यस्य ज्ञानस्य नितान्तम् आवश्यकता न्यायसम्बद्धव्यक्तीनां न्यायकर्तॄणां न्यायसहायकानां च वर्तते । किन्तु अयं न्यायसिद्धान्तस्य परिभाषायां नैव आगच्छति । अनया दृष्ट्या कैश्चित् विशेषज्ञैः स्वीकृतानां परिभाषाणाम् अपेक्षणीयता वर्तते ।

**अष्टिन्द्वारा रचितस्य विधिशास्त्रस्य परिभाषा**

३.११ इंलण्डस्य प्रसिद्धविधि-शास्त्रज्ञेन आँष्टिनमहाभागेन १८३२ तमे ख्रीष्टाब्दे स्वस्य प्रसिद्धे ग्रन्थे The Province of Jurisprudence Determind अस्य शास्त्रस्य परिभाषा विधानस्य सत्स्वरूपम् एवं च अस्य शास्त्रस्य सीमानिर्धारणं विधिवत् कृतम् । यद्यपि आष्टिनमहाभागेन वेन्थमस्य प्रभावेण प्रभावितः । स उपयोगितावादस्य सिद्धान्तान् वर्धयित्वा विधिशास्त्रस्य महान्तमुपकारं साधितवान् स भविष्यदर्थम् एकस्य मार्गदर्शकस्य भूमीकां संपादितवान् । तथापि परवर्तिभिः लेखकैः एतद्विषयकविशेषज्ञैश्च आँष्टिनमहाभागस्य विधानवत् सिद्धान्तोऽयमासीत् यत् विधानं भवति राज्यस्य प्रभुसत्तात्मिका आज्ञा, यस्य परिपालनार्थं राज्यशक्तिः सततं कटिबद्धा । अस्या उल्लंघनं दण्डनीयं भवति (Law is the command of the Sovereign)।

तस्य उक्तिरियं यत् विधिविज्ञानस्य कस्मिंश्चित् विभिन्नपरिच्छेदे अस्य उपयुक्तो विषयो भवति सकारात्मकः (Positive Law)। सकारात्मकविधानं नाम दृढतया यत् विधानं कथ्यते । तस्य अर्थो भवति एकः स्वतन्त्रराजनीतिकसमुदायान्तर्गतसम्पूर्णक्षमतासंपन्नः वा सार्वभौमिक शासनस्य सुस्पष्टाधिकारद्वारा स्थापितं विधानं, नाम यत् अस्तिवाचकम् (Positum)।

**विधिविज्ञान विशिष्ट वा राष्ट्रिय भवति**

३.१२ संपूर्णतः अथवा अन्येन अभिग्रस्तस्य एकस्य सन्दर्भस्य विचारं कृत्वा समुदायविशेषस्य सकारात्मकविधाननियमः विधि-निकायः अथवा प्रणाली

(A system or body of law) भवति । इयमेका एतादृशी प्रणाली या तस्य संघटकखण्डपर्यन्तं सीमितातिष्ठति, अतः तद्विधानं विधि-विज्ञानंविशिष्टं राष्ट्रियं वा भवति ।

### विधानस्य बहुविधप्रणाली

३.१३. यद्यपि विधानस्य प्रत्येकप्रणाल्याः निर्धारिताः विशिष्टविभिन्नताः भवन्ति, परन्तु तासां सिद्धान्तः भावः तथा च ताः पृथकता अपि, या बहुविधप्रणालीभिः सह समानाः तिष्ठन्ति । उपस्थिताश्च भवन्ति ताः सादृश्यं समाननां च सृजन्ति, यया सह सा प्रणाली सम्बद्धा । बहुदृष्ट्या अयं सामान्यः सिद्धान्तः प्रत्यकप्रणाल्यां समानः । यथा अशिष्टसमाजस्य विरला तथा अपरिस्कृतप्रणाली । तथा परिस्कृतसमुदायस्य विपुला परिपक्वप्रणाली । किन्तु परिस्कृतसमुदायस्य विपुलाः तथा परिपक्वप्रणाल्यः । विभिन्नप्रकारसादृश्यैः या समस्ता प्रणाली उपलभ्यते, तया सह सम्बद्धस्तिष्ठति । एवंप्रकारेण परिपक्वप्रणालीषु यः विभिन्नप्रकारकः सिद्धान्तः समानः अथवा यत् विभिन्नप्रकारकं सादृश्यं स्वयमुपलभ्यते तत् एकस्य विस्तृतविज्ञानस्य विषयो भवति । एतत् विज्ञानं यत् एकस्मिन् पक्षे राष्ट्रियं विशिष्टविधि-विज्ञानं वा अन्यस्मिन् पक्षे विधान-विज्ञानात् विभिन्नं भवति । सामान्यविधिविज्ञानम् अथवा सकारात्म विधानस्य दर्शननाम्ना कथितम् इति ।

### विधिविज्ञानमाध्यमेन तस्यं विस्तारः

३.१४ यथा सकारात्मकप्रणालीषु अपकर्षित (Abstracted) सिद्धान्तः सामान्यविधिविज्ञान विषयान्तर्गतो भवति । अनेन प्रकारेण सिद्धान्तानामभिदर्शनम् अमुष्य अनन्यं समीचीनम् उद्येश्यं च । उपयोगितायाः परिमापनेन परीक्षितमथवा या कयाचित् नानाविध परीक्षया परीक्षितं तत् मनुष्यस्य मतेः विभाजनं करोति, विधानस्य साधुत्वेन असाधुत्वेन च सह तस्य तात्कालिकः सम्बन्धो नास्ति । यदि कश्चित् एकं पृथक् सिद्धान्तं गृह्णीमः योऽस्य उपयुक्तो विषयः, अत्र उपयोगितां प्रति विचारः आवश्यकः । तर्हि केवलम् एषां सिद्धान्तानां व्याख्यार्थं भवति, न तेषां योग्यतायाः प्रतिपादनाय । एवं च एतत् तथ्यं प्रश्नान्तर्गतविज्ञानं (Science in question) विधिविज्ञानात्

पृथक् करोति । एतत् एकां योग्यतां वा स्तरं निर्धारयति । येन सकारात्मकविधानानि सृज्येरन् अथवा येन सकारात्मकविधानं समायोजितं भवति ।

३.१५ यदि अनेन प्रकारेण विज्ञानस्य सम्भाव्यता सन्देहास्पदा भवति तर्हि अत्र एतदेव कारणम् उत्पद्यते यत् प्रणालीविशेषे यः सिद्धान्तः विभिन्नताश्चः सामान्याः ते स्वकीयविचित्रतया जटिल तया च स्वकीयविशिष्ट-प्राविधिकभाषायाम् प्रकाश्येरन् इति । मया साधारणविधिविज्ञानेन अस्यविज्ञानस्य यः सिद्धान्तः भावः विभिन्नताः या विधानप्रणाल्यां सामान्या तत् अभिदर्शनिन सम्बद्धमानयामि । इमां विधानप्रणालीमहमत्र विस्तृत तया परिपक्वप्रणालीत्वेन अवगच्छामि यत् स्वीयविस्तारेण परिपक्वतया च सुचारुरूपेण आदेश गर्भितं तिष्ठति । "सिद्धान्तः, भावो विभेदश्चेति ये साधारणविधिविज्ञानस्य विषयाः तेषु किंचित् आवश्यकं मन्यते । यतोहि वयम् एकां युक्तिसंगतविधि-प्रणालीं विना तदीय संघटकखण्डस्य अनुमानं नैव कल्पयितुं पारयामः ।"

३.१६ परन्तु विधानस्य विशेषाध्ययनात् विश्लेषणात् च एतत् परिलक्षितं भवति यत् विधानस्य क्षेत्रे केवलम् एतादृशी राजाज्ञा नास्ति वरम् एतदन्तर्गतत्वेन एतादृशी रितिः परंपरा वर्तते या राज्यस्य कृते घोष्यते । किन्तु सा एतैः मान्यताप्राप्तोया राजभिः उदघोषिताः नियमाः । अतएव आँष्टिनमहाभागस्य परिभाषायां विभिन्नाः विचारकाः एवं च विचारधारायाः प्रवर्तकाश्च आलोचनया उपस्थिताः । संक्षेपेण तेषां विचारः अनेन प्रकारेण उपस्थाप्यते ।

३.१७ विधिशास्त्रस्य प्रसिद्धः लेखको हलाण्डमहाभागोः विधिशास्त्रे अस्तिनमहोदय स्य सिद्धान्तं स्वीकृतवान् । 'Formal science of positive law' इति विहितं विधानम् औपचारिकविज्ञानं स कथितवान् । इंलण्डदेशस्य द्वितीयो लेखकः प्राध्यापकः एलैनमहाभागः अमुम् 'Scientific synthesis of the essential principle of law' इति विधानस्य आधारभूतसिद्धान्तस्य वैज्ञानिकस्मन्वयं कथितवान् । प्रसिद्धः विधिशास्त्री केलसन अपि आँष्टिनवत् बहुमुखिभिः अङ्गैः सह मिश्रयित्वा तमेकीकृतवान् । यथा नीतिशास्त्रे, विधिकरणे, सिद्धान्ते । ऐतिहासिके सिद्धान्ते, व्यवसायमूलकसिद्धान्ते च स्वस्य मुखमपि

न दृश्यते । यद्यपि अस्य शास्त्रस्य एकं विशिष्ट व्यक्तितं नास्ति । अतएव लेखकेन विधिशास्त्रम् आदर्शरूपक (Norm) रूपविज्ञानत्वेन कथितम् । एवं च अस्य विषय-निर्धारणं विधानस्य आदर्शरूपान्वेषणं (Grand norm) कथितम् । अस्मिन् निकषेतेन विधानस्य मूलाधारस्य परीक्षणकृतम् एवं च विभिन्न दिङ्मण्डलात् विधिशास्त्रस्य रूपं मूलतः विकृतं कृतम् । तदर्थं यो विचारः प्राक् तस्मिन् प्रविष्टः तस्य निराकरणं कृतम् । विधिशास्त्रस्य ऐतिहासिकशाखायाः प्रादुर्भावक आसीत् सोभिग्नी । तस्य सिद्धान्तानुसारेण विधानस्य वर्तमानायाः एवं च परिवर्तितायाश्च पृष्ठभूमेः बोधं विना अस्य सम्यग्रूपं बोधगम्यं न भवति । भाषावत् विधानं विकासस्य वस्तु भवति । एवं च अमुं दृष्टिकोणं सम्मुखे नस्थापयित्वा विधानस्य विधिशास्त्रस्य च सत्यार्थेन अवगमनं कठिनं भवति । एतत्प्रकारकायाः विचारधारायाः प्रवर्तनं कृत्वा सोभिग्नीना विधि-विज्ञानस्य प्रचुरा सेवा कृता । एवं च परिणामतः अनेन विधानस्य विशदेतिहासो लिखतः, तथा च, पोलक तथा मेटलैण्ड, होलुसवर्थ विनीग्रेडीफ इति प्रभृतिभिः अनया दिशा प्रशंसनीयं कार्यं कृतम् । ततः परम् अन्या काचित् विचारधारा वा शाखा वर्तते । या अभिष्टमूलत्वेन समाजमूलत्वेन च (Functional वा Sociological) परिचीयते । एतन्मतानुसारेण विधानं कोऽपि विशुद्धवैज्ञानिकः सैद्धान्तको व्रा आदर्शो न भवति । एतत् भौतिकं विज्ञानवत् । रसायनशास्त्रवत्, गणितशास्त्रवत् भौगलिकशास्त्रवचनं न भवति । येषां नियमः सिद्धान्तो वा शाश्वतो वर्तते । वर मियमेका व्यवहारिकी परिवर्तनशीला भावना वर्तते । यस्य लक्ष्यं समाजस्य परिवर्तनेन परिवर्तते अस्य मनोविज्ञानीयम् अध्ययनं भवति । विधिशास्त्रज्ञः अस्य सिद्धान्तं निष्पीड्य न केवलं तस्य वास्तविकं रूपं बुध्यति, परन्तु शोधनाय परामर्शमुपस्थापयति । अनेन नूतनानि विधानानि सृज्यन्ते । एतत् समाजस्य कल्याणाय आवश्यकम् भवति । अस्याः शाखायाः प्रतिपादकः आमेरिकाराष्ट्रस्य प्रसिद्धः विधिशास्त्री रुस्कोपावुण्ड भवति । स स्वीयं सुदीर्घजीवनं विधिशास्त्रस्य वैज्ञानिकाध्ययने ग्रन्थ-प्रणयने च उपयोजितवान् । अनेन सारांशरूपेण अयं सिद्धान्त उपस्थापितो यत् विधिशास्त्रस्य

एतत्प्रकारकोद्येश्यस्य काऽपि संगतिः सार्थकता वा नास्ति, या विज्ञानरूपेण मानयित्वा व्यावहारिकात् सामाजिकात् च जीवनात् पृथक् । सत्यं त्वेतदेव यत् एतादृशः कश्चन सिद्धान्तो भवितुं नार्हति यत् वर्तमानातीतभविष्यत्त्कालेषु समानरूपेण प्रयोक्तुंशक्यते । तेन अस्मिन् विषये स्वविचारः इत्थं प्रकटीकृतः ।

३.१८ विधिविज्ञानस्य क्षेत्रमेंतदेव यत् राजनीतिकोद्येश्येन संघटितस्य समाजस्य शक्तेः प्रयोगमाध्यमेन समाजस्य नियन्त्रणम् । अनेन विधिव्यवस्थायाः उत्पत्तिर्भवति । एतदर्थम् इत्थं प्रामाणिकसामग्र्याः आवश्यकता वर्तते यत्र न्यायालयः स्वयंनिर्णयार्थं कारणानि अन्वेषयितुं शक्नोति एवं च कस्यांचित् विकसितशांसन-व्यवस्थायामेतदर्थमित्थं न्यायिकप्राशासनिकप्रक्रिया आवश्यकता विद्यते यत्र किं विधिसम्मतं किं न । तस्य च निश्चयः कर्तुं शक्येत ।

३.१९ एतस्मादृते पुनश्चैका विचारधारा वर्तते या Telelogical वा विशुद्धदार्शनिकविचारधारा नाम्ना व्यपदिश्यते यदनुसारं समाजार्थं काचित् विशिष्टा मान्यता अथवा मूल्यं विद्यते, यत् मानयित्वा गमनमावश्यकम् । इयं मान्यता न्यायसिद्धान्तनाम्ना कथ्यते । तस्य स्वीयमस्तित्वमास्ते । समाजस्य समुचितसंचालननिमित्तमस्य अध्ययनम् अन्वेषणं कार्यान्वयनं च नितान्तमावश्यकम् यतोऽहि तेषांमभावे अन्यः कश्चित्भिन्नो दृष्टिपथ आगच्छेत् । तेषामवधारणायाः काचित् भित्तिंः नास्ति, समाज कल्याणं भवितव्यम् । किन्तु मन्यतां कस्यचन उच्छृंखलतावादिनो बुद्धिवादिनश्च एतत् मतं भवेत् यत् अस्माभिः सुखशान्तिश्रेयस्त्वेन अवगम्यते तस्य अपहननेन समाजः सुखी भवेत् तर्हि तदर्थं विपरीत विचारकाणां कृते किमुत्तरं स्यादिति । अतएव अस्माभिः काचित् विशिष्टामान्यता स्वीक्रियते । दार्शनिकशाखायाः प्रतिपादकस्य अथवा अनुगामिविधिशास्त्रस्य लक्ष्यं न्यायस्य एतादृशमूल्य निरूपणमिति ।

३.२० उपर्युक्तसिंहावलोकनेन एतत्स्पष्टं भवति यत् विधिशास्त्रं वैज्ञानिकशास्त्रवत् न भवति । यस्य सीमानिर्धारणे किमपि काठिन्यं न भवति । अनेन शास्त्रेण सह सम्बद्धा व्यक्तिः विना प्रतिबन्धकं विना क्षेत्रसीमायाः अंकने ऐकमत्यं प्रकटयितुं पारयति । किन्तु यथा दर्शनशास्त्रस्य क्षेत्रं सुमहत् वर्तते ।

तत्र लोक-परलोकयोः समस्तो विचार्यविषयः समावेश्यते । तथैव विधिशास्त्रस्य संबन्धो अद्यापि अस्य शास्त्रस्य कस्मैचन विद्यार्थिने यदि किञ्चिदङ्गं रुचिकरं न भवति तर्हि ते भिन्न-भिन्न पद्धतिमाश्रित्य सिद्धान्तं समीक्षन्ते । एतदर्थं विधिशास्त्रस्य क्षेत्रं सर्वथा अनिश्चितं भवति ।

३.२१ अस्मिन् प्रसङ्गे अस्माभिः विधिशास्त्रेण सह संम्बन्ध एकया अभिनवविचारधारया द्रष्टुमिष्यते। यो विषय Sociology of law अथवा विधानस्य समाजाधारिता इति कथ्यते । अयं सामाजिकविधिशास्त्रात् अथवा Sociological Jurisprudence इत्यस्मात् भिन्नतया उच्यते ।

३.२२ सामाजिकविधिशास्त्रम् अस्य विज्ञानस्य नियमानां सामाजिकतथ्यानां धारणानां पृष्ठभूमौ अध्ययनाय मार्गो भवति । विधानस्य समाजाधारितं व्याख्या गुरविचमहाभागेन कृता । विधानस्य सामाजाधारिता मानवात्मनः सामाजिकाधारस्य एको बृहत् अंशः यो विधानस्य समस्तसामाजिक यथार्थताया अध्ययनं करोति यस्य प्रारम्भः समाजस्य प्रकटेन स्पष्टरूपेण भवति । संघटित संस्थाया एवं चरित्रस्य नवीनतया स्थानेन जनाश्रित भैतिकास्थाभिश्च तत्र इयं संबद्धा विधानस्य समाजाधारितान् । इमान् व्यवहारान् तथा भौमिकाभिव्यक्तिं च विश्लेषयति तत्र निहितमर्थमन्विष्य उद्घाटयति ।

योऽस्य वस्तुनः अन्तरे विराजते तत् अनुप्राणयति पुनश्च स्वयं तेन प्रभावितो भवति । तत्र विहिता विधान-प्रक्रिया, विधानस्य आन्तरिकसंचालकशक्तिः या विधाननिर्माणात्पूर्वं तिष्ठति तेषां सांकेतिकप्रतिमानानामभ्यन्तरे नियमोपनियमेषु तथा स्वयंचालितविधानेषु अयं प्रविशति । पुनश्च, प्रकटविधानेभ्यः तथा नियमोपनियमेभ्यश्च वैधानिकमानानि स्थापनानि च स्थिरिक्रियन्ते । तैः ते आदर्शाः निरूपिता भवन्ति । एते सर्वेभ्यो विधिभ्यो बलवत्तां प्रददति ।

३.२३ विधानस्य सामाजिकता मानवात्मनः सामाजिकतायां अंगं भवति, यस्य प्रारम्भः तस्य प्रत्यक्षरूपात् बाह्यरूपात् च स्पष्टमभिव्यक्तं भवति इति, यत् सामाजिक संघटनेन रीतिगतप्रचलनेन, परम्परया आचरणमूलकनवीनतया च प्रकाश्यते । तस्य सामूहिकव्यवहारेण सह संबन्धो वर्तते । तस्याधारः स्पष्टो

भौतिकश्च । विधानसंस्थायाः विस्तारोपरि तस्य प्रभावः पतति । विधानस्य सामाजिकता एतदाचरणस्य अभिव्यक्तेश्च व्याख्या भवति यस्य आधारः तस्य निगूढम् उद्येश्यम् । तत् प्रेरयति, तत्र च ओतःप्रोतः तिष्ठति । एवं च तेन प्रभावितो भूत्वा स्वरूपं परिवर्तयति । विधानस्य यः सांकेतिक आदर्शः स पूर्वतः सुनिश्चितो वर्तते । विधानस्य सुनियोजितविधान-प्रक्रियया तदीयाभ्यन्तरशक्त्या च प्रादुभूतं भूत्वा विधानस्य प्रत्यक्षतया विशिष्टनियमपूर्वकविधिनिषेधाभ्यां तत् प्रकटितं भवति । पुनश्च तैः अग्रे गत्वा विधिगतमूल्ये तथा विचारे अन्ततः सामूहिका स्थासु तथा अन्तःप्रेरणासु च प्रविशति यत् एतन्मूल्यं भावं च प्रति उन्मुखं भवति, यत्प्रतिमानमूलकतथ्येषु अभिव्यज्यते एवं च विधानस्य समस्तप्रकारकाणां बाधशक्तेः मूलाधार इति वक्तुं शक्यते ।

३.२४ विधि-विज्ञानस्य, अथवा अनिवार्यविधानस्य च दृढनियमेन, प्रतिमानमूलकसंकेतस्य अभिसंगतश्रृखलायाः रचना कर्तुं शक्यते, योंऽशतः कर्कशः अथवा जटिलो भवति, एवं च विशेषकाल कोटिका तथा कस्यचन विशेषसमुदायस्य अनुभवार्थम् उपयुक्ता यस्याः लक्ष्यं धर्माधिकरणीयकार्यजातं सुगमं करोति । किन्तु विधानस्य समाजशास्त्रीयप्रत्येकसमाजस्य तथा दलस्य च अनन्तानुभूतिं कल्पयति या प्रत्येकानुभूतेः उदरस्य वस्तु वर्णयति, यावत् पर्यन्तं सा प्रत्यक्षदृश्यरूपेण ज्ञातुं शक्यते एवं य विधानस्य प्रकटरूपां प्रकाशयति, या च विधानस्य बाह्यरूपेण आवृतनिष्ठति न प्रकाशभागच्छति । अनेन प्रकारेण अस्य प्रश्नस्य त्रीणि तत्त्वानि सन्ति यथा :- (१) श्रृङ्खलाबद्धविधेः अथवा समष्टिवद्धविधेश्च सामाजिकता, भिन्नतागतविधेः सामाजिकता एवं च (३) गतिशीलसामाजिकता (Problems of systematic sociology of law, problems of the differential sociology of law, problems of the genetic sociology of law.) ।

३.२५ प्रथमप्रकारकसमस्यायाः संम्बन्धः समाजस्य एतेः सर्वांगीणाध्ययनैः भवति येन विधानस्य उद्गमः मनुष्यस्य सामाजिकप्राणित्वेन सम्बन्धं रक्षति । येन भिन्न-भिन्न प्रकारकाः स्थितयः उत्पद्यन्ते, यस्य नियन्त्रणं विधाननैव भवति ।

भिन्न-भिन्न व्यक्तीनां हितेच्छायोः अभियुक्ताय समन्वयो भवति ।

द्वितीयश्रेण्याम् एताः समस्याः आगच्छन्ति याः समाजस्य अभ्यन्तरे क्षुद्रातिक्षुद्रसामूहिकैककैः सह सम्बद्धाःतिष्ठन्ति । यथा धार्मिकैककम् आर्थिकैकं तथा सांस्कृतिकैककम् । तृतीयश्रेण्यां ताः समस्या आगच्छन्ति याभिः समाजस्य परिवर्तितपरिस्थितिवशात् विधानेषु संशोधनस्य वा परिवर्तनस्य आवश्यकता प्रतीयते । अनेन प्रकारेण अस्य दृष्टिकोणस्य लक्ष्यं केवलं समाजेनैव प्रचलिततथ्याना मध्ययनमात्रं, तेन च विधिशास्त्रस्य स्थापितानां भावानां संवादो नैव लक्षीभूतः, अपितु समाजस्य सूक्ष्मविश्लेषणात्मकम् अध्ययनमेव । विधानं समाजस्य आत्मा । तस्य प्रवृत्तीनां सूचारुरूपेण प्रचलनाय प्रकाश्यरूपं भवति । अनेन प्रकारेण विधान-सभायाः प्रचारणात् अनन्तरमथवा रीतिरूपेण स्वीकृतेः प्राक् समाजे विधानस्य अस्तित्वं समाहितमिति बोध्यते । विधान-सभा केवलमेतस्मै स्थूलरूपं ददाति । अनेन प्रकारेण विधानस्य आधारः सर्वकारस्य अनिवार्यरूपेण प्रजार्थं परिपालनीयो नियमः न भवति इति यस्य उलंघनेन राज्यद्वारा दण्डःप्रणीयते, वरं स्वयं राजशक्तिरूपकयन्त्रवत् विधानस्य निमित्तमात्रम् । राजशक्तिः प्रजाश्च विधानस्य अनुवर्तिन्यो भवन्ति ।

३.२६ अनया रीत्या शर्मण्यदेशेमेकसबीबरः, अहरलिखश्च (Ehrlich) फ्रान्सदेशे ट्यूगिर्वं, लोवी, होरेयी च, आमेरिकादेशे जस्टिसहीम्स, पावुण्डे, तिमाकमकारडीजी तथा गुरुविचः वर्तन्ते, यैः विधानस्य दार्शनिकाधारेण मिश्रितभावेन नूतन-शास्त्रीयदृष्टिकोणस्य प्रतिपादने स्वीयविचारेण महत्वपूर्णयोगदानं कृतम् ।

३.२७ प्राचीनभारतीयविधि-विमर्शे यदिदानीं विधिभाषाया हिन्दुविधिरिति कथ्यते तत्र विधिशास्त्र सदृशः कश्चन विशेषविषयो नास्ति । सत्यंत्वेतदेव यत् यूरोपदेशे विधान-व्यवस्थायाः मूलाधारः रोमस्य विधान-प्रणाली आसीत् । तस्मिन् समये इदानीन्तनिककालवत् विधिशास्त्रं नैवासीत् न स्थास्यति । रोमीयविधान-व्यवस्था एव विधिशास्त्रस्य आधारः इत्यनेन अर्थेन स्वीक्रियते यत् (Twelve tables) द्वादशपदेषु रोमस्य समस्तविधानमेकत्र स्थापितम् । तस्य मूलमाधृत्य विधिज्ञानं विधानपण्डितानां ये, जूरिंसकौन्सल्टस कथ्यते

तेषां, व्यावहारिकव्यवस्थायाः (Responsa prudentium) विधानसमुच्चयस्य विकासःकृतः । पुनश्च सम्राड्जस्टिनीयमहाभागेन अयं विषयो विस्तृतभावेन स्वस्य संहितासु संकलितः । विधानानामाधारेण दार्शनिकविवेचनं कतिशताब्दीनामन्तरं यूरोपे प्रारब्धम् । तदानींधार्मिकक्रान्तिद्वारा तर्कबुद्धिः विशेषरूपेण प्रीत्साहिता कृता ।

३.२८ भारतीयार्यजातौ अपि विधानस्य विकासेन सह कश्चन एतादृशो ग्रन्थोलिखितः, यस्य तुलना अद्यत्वे विधिशास्त्रस्य ग्रन्थेन सह कर्तुं शक्यते । सत्यं त्वेतदेव यत् कस्यचन सामाजिकनियमस्य अनुसरणाय आदेशंकृत्वा यत्रयत्र विधिनिर्देशन सह तस्य परिपालनीयताविषये किंचित् करणमपि प्रदत्तम् । यदि ते एकत्र समाह्रियरन् तर्हि संभवतः एकप्रकारकं विधि-दर्शनं प्रस्तुतः क्रियते । एतदर्थं यदि विधिशास्त्रोपरि अनया दृष्टया विचारः क्रियते । तर्हि यथा रोमस्य विधिकल्पनायाः भितौ इदानीनन्तनविधिशास्त्रे कानिचन मौलिकानि अंगानि प्रसूयन्ते, तथा वस्तुमूलकस्य व्यक्तिमूलकस्य च विधानत्वेन स्वत्वं, स्वामित्वं, विनियोगः, आगमः, भुक्तिः दण्डनीतिः इति विषयाः सन्तिः । ते भारतीयविधिग्रन्थेषु नाम धर्मशास्त्रेषु प्राप्यन्ते । एतदवश्यं विचारणीयं यत् यद्यपि रोमे व्यक्तिमूलकविधाने विवाहादौ धार्मिकसंस्काराणां महत्त्वमासीत् तथापि विधानस्य प्रधानलक्ष्यं सांसारिकमासीत् ।

३.२९ एवंरीत्या, रोमं-भारतयोः विधानस्य तुलनया एतत् ज्ञायते यत् अत्र प्रचुरप्रकारकं साम्यमस्ति । किन्तु विधानस्य आधारसम्बन्धे विकाशसम्बन्धे च मौलिकी भिन्नता विद्यते । तर्हि पुनश्च प्रश्न आयाति यत् विधिशास्त्रस्य परिभाषा का भवितुमर्हतीति । प्राक् ऑस्तिनमहाभागस्य मतमुल्लिखितं वर्तते । किन्तु विधिशास्त्रस्य अथवा जुरिस्प्रुडेन्सशब्दस्य व्यवहारः पाश्चात्त्यदेशेषु अपि विभिन्नर्थेषु भवति । एकस्मिन् पक्षे ऑस्तिनमहाभागस्य निर्दिष्टाशयसंपन्नशास्त्रम् । एतन्मतानुसारेण विकसितविधान-प्रणाल्याः प्राक्तनांगस्य परीक्षणशास्त्रं भवति विधिशास्त्रम् । प्राध्यापकपावुण्डमहाभागेन अस्य तुलना लौहकारस्य कर्मणा सह कृता । यथा अयं निजहस्तस्य लौहेन सह कष्टं योजयित्वा एकं विचारमनुसृत्य एकमङ्कुशं प्रस्तौति । किन्तु फ्रांसदेशे अस्य शास्त्रस्य परिभाषा पृथक् विद्यते ।

तत्र जूरिसप्रूडेन्सद्वारा धर्माधिकरणेन घटितव्यानां निर्णयानां संकेतो भवति। अस्य प्रयोगः औपचारिकविधानकारिण्या शक्त्या सह विभेदकारणार्थे कृतमासीत्। यदिवा सांप्रतं अस्मिन् व्यवहारे किंचित् आन्तर्यमागच्छति। आमेरिकादेशे कस्मिंश्चित् प्रसंगे अस्य व्यवहारः फ्रान्सदेशीयोऽपि भवति। एवं रीत्या यदा इक्विटी जूरिसप्रूडेन्स शब्दस्य व्यवहारो भवति तदा तस्य अर्थः इक्विटी न्यायलयेन प्रदतो निर्णय एव भवति। अनेन प्रकारेण आमेरिकादेशे साधारणतः जूरिसप्रूडेन्स विधानं च समानार्थे व्यवहृतौ भवतः। आमेरिकादेशे तु तेन सह वैद्ययिक व्यवहार- सम्बन्धि वैद्यकनिर्णयानां संकलनं मेडिकलजूरिसप्रूडेन्स, दन्तचिकित्सकैः संपादितो नियमः डेण्टल जूरिसप्रूडेन्सनाम्ना विख्यातो वर्तते। तेन प्रकारेण इंजिनियरिंगजूरिसप्रूडेन्सशब्दोऽपि व्यवहृतो भवति। अनेन व्यवहारेण एतत् स्पष्टं यत् जूरिसप्रूडेन्समूल्येषु कस्यचन शास्त्रविशेषस्य मौलिकनियमोऽअन्तर्भूतो वर्तते। एतदर्थमेतत् विधि-विज्ञानम् अथवा 'साइन्सऑँव ल' इति कथ्यते।

३.३० किन्तु अत्रापि किंचित् काठिन्यम् अनुभूयते यत् लशब्दस्य परिभाषा विवादग्रस्ता वर्तते। द्वितीयतः स्वयं विज्ञानस्य परिभाषाऽपि विवादग्रस्ता। लॉं इत्यस्य प्रारम्भिकोऽर्थो भवति संपूर्णविधानं यस्य पालनीयता कस्यापि राष्ट्रस्य नागरिकनिमित्तमेकावश्यकता। द्वितीयतः ल द्वारा वयंतमर्थं संकेतयामः यःत निर्णयं संचालयति। तुलनात्मकविधानमिति शब्दस्य व्यवहारेऽपि अयमर्थो निहितो विद्यते। अन्यस्मिन्नर्थेऽपि अनेन तच्छक्तेः संकेतो लभ्यते। एतेन राजनीतिकदृष्ट्या संघटितः समाजः संचालितो भवति। एतदर्थं, विधानं प्रति सम्मानस्य अयम् अर्थो देशस्य समस्तविभागान् प्रति आस्था। अस्य अन्योऽप्येकोऽर्थोऽस्ति, यदनुसारं न्यायालयस्य प्रक्रियाया (Judicial process) अपि आशयो वर्तते। अर्थात् किमप्याधृत्य कयाचित् प्रक्रियया अयमथो निःसरति यत्र उपयुक्तानां त्रयाणामाशयः सम्मित आस्ते।

३.३१ यथा विज्ञानस्य अर्थे मतैक्यं नास्ति, तथा दर्शनस्य अर्थेऽपि मतैक्यं न तिष्ठति। विभिन्नप्रकाराणामर्थे अस्य प्रयोगो भवति। किन्तु सामान्यतः विज्ञानेन अस्य सुशृंखलितज्ञान-सम्मुच्चयस्य बोधो भवति, यः कस्यचन विशेषविषयस्य

सम्बन्धे आलोचनात्मकदृष्ट्या एकत्र क्रियते । अनेन प्रकारेण लसंबन्धोऽपि सामाजिकनियत्रणेन प्रत्येकव्यक्तेः उपरि अनुशासनार्थं भावो बोध्यते इति । एवं रीत्याः जूरिसप्रूडेन्ससम्बन्धे प्राध्यापकपावुडमहाभागेन कथितं यत् ।

३.३१ राजशक्तिसम्पन्नसमाजस्य प्रभावेण समाजस्य नियत्रणमेव विधि-विज्ञानस्य विषयः । एतदर्थमकस्याः प्रामाणिकसामग्र्याः एतत्समूहस्य आवश्यकता वर्तते यत्र न्यायाधिकरणं निरूपणाय आधारं प्राप्नोति । कस्याश्चन विकसितन्यायप्रणाल्याः एतादृशी न्यायिकी तथा प्राशासनिकी प्रक्रिया अनिवार्या भवति, या आचरणस्य परिणामसम्बन्धे निश्चितं व्यञ्जयितुं शक्यते ।

३.३२ एतत्संबद्धो द्वितीयः प्रश्नोऽपि उत्तिष्ठति यत् एवंप्रकारकेण केवलं सैद्धान्तिकाध्ययनेन को लाभः ? अस्मिन् विषये ऑस्तिनमहाभागस्य मतोद्धारः ऐतिहासिकदृष्ट्या न केवलम् एकस्य महतो विधि-चिन्तकस्य दृष्ट्या, अपितु तस्य सूक्ष्मतायाः तथा विशदतायाश्च दृष्ट्याऽपि समीचीना वर्तते । तेनाक्तं यत् -

३.३३ मयाऽत्र एतऐव वक्तुं समीचीनं मन्यते यत् एतेषां नवयुवकानां लाभाय ये विधिव्यापारप्रवेशाय आत्मानं प्रस्तुवन्ति ते कस्यचन व्यवहारस्य अधिवक्तुःसकाशात् व्यावहारिकदक्षता प्राप्तये तथा च अग्रेचलित्वा सफलव्यावसायिककार्यसंपादनाय सम्यक् भितिस्थापनं कुर्युः । तर्हि श्रेष्ठविदेशिविश्वविद्यालयेषु स्थापितविधिसंकायवत् संस्थायाः स्थापनमुपयुक्तम् । इयं संस्था इत्थं स्यांत् विधि-विज्ञानस्य यत्र विधिनिर्माणस्य च सामान्यसिद्धान्तः पाठ्येत, तत्र आचरणशास्त्रमपि सम्मिलितं भवेत् । अन्ताराष्ट्रियविधानम् आङ्ग्लोविषयकेतिहासः यत्र रोमीयप्रथायाः इसाईप्रथायाः तथा सामन्तिप्रथायाः विधानस्य मुख्यविषयाः समावेशयिष्यन्ते । एवं च विभिन्नाध्यायैः विभक्ताः प्रचलिताः आङ्ग्लोविधयः योग्यशिक्षकैः पाठयिष्यन्ते इति ।

३.३४ एतादृश्यां संस्थायाम् एतादृशाः नूतनयवकाः शिक्षां प्राप्नुयुः येषामुद्येश्यं न विधानस्य व्यवसायः परन्तु सार्वजनिकजीवनम् । तथा सति तैः समस्तविषयेषु ज्ञानं प्राप्येत येषामावश्यकता विधायकानां भवेत् । एतादृशाः नूतनयुवकाः ये न्यायप्रशासनेन सह इतरप्रशासनैश्च सह संबद्धा भवितुमिच्छन्ति । ते विधानस्य शाखायामपि प्रविशेयुः । एवं च नवयुवकाः विधिव्यवसायं स्वीकुर्तुमिच्छन्ति,

ते राजनीति-शास्त्रस्य भिन्न-भिन्नानामङ्गानामध्ययनं प्रारभेरन्, यथा अर्थशास्त्रादीनि । कारणं त्वेतदेव यत् साधारणविधिविज्ञानस्य सिद्धान्तस्य अध्ययनं विधिव्यवसायार्थं कति वा महत्वपूर्णं किं न स्यात् । संहिताकरणेन संपृक्तविधानज्ञातृभ्यः कतिवा अनिवार्यावश्यकता किं वा न स्यात् परन्तु सार्वजनिकजीवनेन संपृक्त मनुष्यार्थम् अस्य आवश्यकता कस्यापि विभागस्य व्यक्तिनिमित्तं किनापि अंशेन न न्यूना ।

३.३५ एतत्तु परमावश्यकं यत् अभिजातवंशस्य अधिकांशपुरुषाः ये पदयोग्यतयोः हेतो रोमस्य पौटिशियनवंशसंपृक्तव्यक्तिवत् व्यवहारिकराजनीतौ संयुक्ता भवेयुः । ते विधानस्य स्थूलसिद्धान्तेन सह अवश्यं परिचिताः भवेयुः । तेन सह विधिनिर्माणसम्बन्धे किंचित् स्पष्टतरं दृष्टिकोणं रक्षित्वा एवं च यदि सम्भाव्यते तर्हि किंचित्गभीरं ज्ञानमपि प्राप्नुयुः किचिद्दिनपर्यन्तं न्यायालयेषु ते प्राड्विवाकत्वं संपादयेयुः ।

यदि संसदः द्वयो सदनयोः एतादृशाः सुसंस्कृताः सामान्याः व्यक्तयःस्युः तर्हि विधानस्य शोधनमागच्छेत् या इच्छा काले काले एताः अधिकतया विवेकपूर्णमतं दद्युः प्रत्यक्षतः समुचित योजनायाः विरोधः संदिग्धस्थलेषु न भवति यस्मिन् विषये एतत् कथयितुं शक्यते यत् तैरवगतिं विना विरोधः कृत इति । अद्यत्वे अस्मिन् नवीनीकरणयुगे इयं काचित् न क्षुद्रा कथा ।

एतदपि मनसि रक्षितव्यं यत् विधिवत् प्रशिक्षितविधिज्ञैः विधाननिर्माणकार्यं सफलतया क्रियेत तथापि तदीयव्यावसायिकसंकीर्णतायाः तथा च व्यक्तिगतस्वार्थस्य उपरि नियन्त्रणनिमित्तम् उपर्युक्त पद्धतिः आवश्यकी ।

किन्तु एतादृशस्य नियन्त्रणस्य दक्ष-विधानवेतृणां प्रोत्साहनस्य च कृते इत्थम् एकस्याः जनतायाः आवश्यकता वर्तते या विधिज्ञा न भूत्वापि विधानस्य स्थूलसिद्धान्तेन सह परिचिता वर्तेत । एतत् कार्यं एभिर्जनैः न कर्तुं शक्यते ये विधानस्य व्यावहारिकप्रयोगेण तथा च तस्य परिपूर्णप्रकरणेन सह अनभिज्ञाः सन्ति ।

विधिविज्ञानस्य उपयोगितायाः सम्बन्धे इतः अधिकतया समीचीनशब्दानां व्यवहारोऽत्यन्तं कठिनतरः इति निश्चीयते ।



# चतुर्थोऽध्यायः
# विधानं नीतिशास्त्रं च

४.१. यद्यपि अस्य विषयस्य उपरि प्रथमेऽध्याये कश्चन अंशः प्रकाशितः तथापि अस्य किंचित् विशदालोचनमावश्यकम् । यतो हि एकोनविंशशताब्द्यां भिन्नभिन्नविचारधाराणां विधि-विमर्शकैः अस्मिन् विषये बहुविस्तारभावेन विवेचना कृता । अस्य कारणमेतदेव यत् विधानशब्दः एकः इत्थम् अनिश्चितः शब्दः भवति यस्य व्यवहारो विधानशास्त्रे नीतिशास्त्रे तथा च विधिविज्ञाने समानरूपेण क्रियते । यथा गुरुत्वाकर्षण-नियमः नीतेः आदेशः औपचारिकविधानं च । द्वितीयकारणमेतदेव यत् इतिहासस्य पृष्ठभूमिमाश्रित्य मानवसमाजस्य विकासदिशि दृष्टिपातेन एतत् स्पष्टं भवति यत् विधानं नीतिं चान्तरा केनापि रूपेण कश्चन सबन्धो निरन्तरतया तिष्ठति । एतत्तु सत्यं यत् द्वयोः उद्गमस्थानमेकमेव । संप्रति प्रचलितायाः मान्यतायाः आधारोपरि विधानं नृतत्त्वज्ञानस्य इतिहासस्य च मूलभूमित्वेन समाजस्य आवश्यकतायाःकारणत्वेन च अवगम्यते । कथ्यते यत् नीतिः विधानं चेति द्वयं पुरुषस्य उपरि सामाजिक-नियन्त्रणस्य रूपद्वयमेव । परन्तु उद्येश्यमेकमेव । विधिशास्त्रिणा विभाशेकेन एतादृशसामाजिकनियन्त्रणे त्रीणि चरणानि दृश्यन्ते । नैतिकनियमाः रीतयश्च, ययोः प्रतिपालनेन समाजद्वारा अनिश्चितानिवार्यतायाः प्रयोगो भवति; किन्तु विधानं यत्र बल-प्रयोगेण समाजः पुरुषेण सामाजिकरीतीनां प्रतिपालनं चकार एवं च तृतीयं चरणं तद्भवति यदा समाजेन नीति-नियमप्रबुद्धदार्शनिक-धार्मिक-नियमैः समाजे इत्थं धारा प्रवर्तिता यथा पुरुषस्य सामाजिकचेतना प्रभाविता, यथा बहु-विवाहनिरोधः, सन्तति-निरोधः, विवाह-विच्छेदश्च येषाम् आधारः पुरुषस्य स्वतन्त्रतायाः मतस्य इच्छायाः अभिरुचेश्च आदराभावः ।

४.२ नीतिशास्त्रस्य आदर्शं दृष्टौ रखित्वा विधानस्य सम्यक् विकाशे पुनः चत्वारि कारणानि निश्चीयन्ते । प्रथमतः विधानं रीतिश्च ययोः पृष्ठभागे नीतिशास्त्रस्य अनुमोदनबलमथवा तस्य समाजेन प्रतिपालनं वर्तते । द्वतीयतः संहिता-बद्धविधानं यथा रोमीयदेशस्य ट्वेल्वटेबलस इति एवं च भारतस्य

मनुस्मृतिः याज्ञवलक्यस्मृतिरित्यादयः । तृतीयतःअवस्था यदा विधानं हृदयहीनतायाः तथा प्रक्रियायाः प्रबलतायाःनीत्या वितर्केण तथा च मानव-भावनाया अनुप्राणितं बभूव। अन्ततोगत्वा सुविचारितम् औपचारिकविधानस्य वा निर्माणं, यत् विधानीकरणं लेजिस्लेशन वा कथ्यते।

४.३ अस्मिन् प्रसङ्गे एवं विधिशास्त्रिभिः चिन्तितं यत् ग्रीसदेशे नैतिकनियमार्थम् एकः शब्द आसीत्। रोमे शब्दद्वयमासीत् विधाननिमित्तम् 'इयूस' एवं नीतेः नियमनिमित्तम् 'मोसं' शब्द आसीत् । पुनश्च धर्मस्य नियमार्थं 'फास'। परन्तु अंगीकृतवचनस्य पालने व्यवहारे च सहायता इत्यादयः नीतेः क्षेत्रे आसन् । अनुबन्धविषयकस्य संविद्विषयकस्य विधानस्य रोमे किमपि अस्तित्वं नासीत् । पुनश्च यदा विधानस्य प्रकृति-विकासः प्रारब्धः तदा विधानं नीतेः पश्चात् पतितम् । इयमवस्था रोमीयविधानस्येतिहासाद् इलंडविधानस्य इतिहासाद् वा ज्ञायते। यथा टेबुल्सनियमेन उत्तराधिकारनियमस्य किंचित् परिवर्तनं न भवति । दासानामिच्छापत्रे लिखितरूपेण अथवा नीतिपञ्जीकरणं सन्निधाप्य अथवा काल्पनिकविधानसंबन्धीयव्यवहारं सृष्ट्वा मुक्तिः कर्तुः शक्यते। किन्तु यदा विधानस्य आध्यात्मिकताबोधः जन-समुदायस्य आगतः, तदा पुनश्च साम्प्रतिकभावनया (Equitable) पत्रं लिखित्वा अथवा मित्रणां समक्षं घोषयित्वा इयं स्वतन्त्रता प्रदत्ता। अनेन प्रकारेण (Easement) पर-सम्पत्तेरुपरि सीमिताधिकारविषयकविधानस्य आदिकाले विधिवत्प्रदत्तो भूत्वा अधिकारिणः अथवा सम्पत्तिस्वामिनः इच्छायाः विरुद्धनिश्चिन कालः व्यवहारद्वारा प्राप्यते । परन्तु क्रमशः साम्प्रतिक-सिद्धान्तस्य अनुसारेण अस्य सीमितधिकारस्य प्राप्तेःव्यवस्था वैधत्वेन स्वीकृता।

४.४ एवं प्रकारेण अष्टादशशताब्द्या नैसर्गिकनियममाधृत्य विधानं नीतिश्चेति पुनश्च परस्परं अधिकतया सन्निकटं आगते, अस्याः विचारपद्धेतः विचारः एकोनविंशशताब्द्याः प्रारम्भपर्यन्तम यदा वेन्थमेन ऑस्तिनमहाभागेन च अस्य विरोधे स्वरोत्तोलनं कृतं तदा विधानस्य नीतिशास्त्रात् पृथक् कक्षे स्थापनमभूत्।

४.५ एकोनविंशशताब्द्याः इयं विचारधारा यत् विधिशास्त्रं दार्शनिकविचारधारात्वेन उच्यते स्म। तस्य जन्म शर्मण्यदेशेऽभूत् । काण्ट-

हेगेल प्रभृतयः तस्य प्रमुखाः स्तम्भसदृशा भवन्ति । तैः विवादो शब्दद्वयेन निबद्धः । यथा - ''रेखट एवं सिटे'' । रेखट शब्दस्य आशयः संप्रति प्रचलितविधानेन सह तिष्ठति, सिटेशब्देन सह नीति-सम्मतरीतिः एतत्तु अवश्यं वक्तुं शक्यते यत् प्राकृतिकनियम (वा Law of Nature) सिद्धान्तस्य अस्तोन्मुखत्वेऽपि केनचित् परिवर्तितरूपेण अस्य प्रभावः दार्शनिकविचारोपरि पतितः । तैरेतत् प्रतिपादितं यत् न्यायालयस्य कोऽपि निर्णयः समुचितो न भवेत् यावत्पर्यन्तं न्यायकर्ता स्वयं नीतेः भावनया परिचालितो न भवति ।

एतदवश्यं प्रतिपादितं भवेत् यत् यत्र सप्तदशशताब्द्याम् अष्टादशशताब्द्यां च प्राकृतिक-नियमं विधानं वा स्वीकृत्य विद्यमानं विधानं नीतिशास्त्रस्य प्रकटितरूपत्वेन मन्यते, यस्य पृष्ठभागे समाजस्य बाधकशक्ति रधिष्ठिता वर्तते । तत्र काण्ट-हेगलप्रभृतिविचारकैः नीतेः विधानस्यच उद्भवः एकस्मात् मूलात् ज्ञायते, यं न्यायत्वेन औचित्यत्वेन च वदन्ति । एकमाचरणस्य आन्तरिकं प्रेरकम्, एवं च द्वितीयम् आचरणद्वारा । यत् प्रत्यक्षपरिणामेन भवति । उमे उभयोः परिपूरके स्तेः ।

४.६ एवं प्रकारेण दार्शनिकविचारधारायाः समर्थकैः द्वयोर्मध्ये कोऽपि भेदो न परिलक्षितः । काण्ट-महाभागस्य हेगेलमहाभागस्य च नवीनानुयायिभिः अस्य मार्गस्य संशोधितरूपमनुसृतम् । स्टैमलर (Stammler) काण्टमहाभागस्य शिष्यः कोहलर (Kohlar) महाभागः हेगेलमहाभागस्य शिष्यः स्टैमलरस्य मतानुसारं विधानस्य अभीष्टं भवति विशुद्ध-न्यायस्यप्राप्तिः । न्यायस्य भावनां बोद्धुं समाजस्य आदर्शस्य सम्यक् हृदयंगमः कर्तव्यः । कोहलरमतानुसारं विधानं नीतिशास्त्रं च सभ्यतायाः चरमादर्शप्राप्तेः साधनम् ।

४.७ विश्लेषणात्मकविचारधारायाः प्रवर्तकैः विधानं नीतिशास्त्रं च अन्तरा परस्परं पृथक्वस्तु मन्यते । यतोहि तेषां मतेन बाधकशक्ति विना विधेः चिन्तनं न भवितुमर्हति इति । एतदर्थं यदि व्यवहारे एतत् दृश्यते यत् यत्र तत्र उभौ परस्परं निकटतमौ भवतः तर्हि एतस्य कारणमेतदेव भवति यत् अद्यावधि द्वयोःसम्यक् पृथककरणं नैव सम्भवति यत् विधानस्य आदर्शो भवेत् । किन्तु स्वयं आस्तिनमहाभागेनापि स्वीकृतं यत् किंचित् स्थलम् एतद् वर्तते यत्र उभयोः सम्मेलनं भवति । एतत्स्थलं चतुर्विधम् ।

न्यायाधीशकर्तृकव्याख्यामाध्यमेन नूतनविधेर्निर्माणमथवा कस्यचन वादविशेषस्य एतदाधारेण निर्णयः । विधानसंपृक्तसिद्धान्तस्य अर्थप्रत्यायने यत्र स्थूलं च सत्यं सुरक्षितं, साधारणं तदर्थं मापदण्डस्य प्रयोगेण विधानसंपृक्तसिद्धान्तानां व्यावहारिक प्रयोगः कर्तव्यः । पुनश्चः न्यायाधीशस्य रुचि-स्वातन्त्र्यं स्वीकर्तव्यम् । परन्तु अस्याः विचारधारायाः समर्थकानामयमादर्शः स्थितः यत् यया मात्रया, विधानस्य विकासो भवेत् तया मात्रया एषां चतुर्णां स्थलानाम् आयतनं संकुचितं भवेत् । किन्तु अत्यन्तघनिष्ठमानसिकविरोधे सति आँस्तिनमहाभागेन एतत् सत्यं स्वीकृतम्, यतोहि इंगलण्डदेशे एतादृशं युगमासीत् यत्र नवोदितोपनिवेशैः साम्राज्यस्य विभिन्नविभिन्नभागैः प्रिवीकाउन्सिलसमीपे इत्यं प्रार्थनाकृता येषां निर्णयं विना न्यायाधीशस्य न्यायभावना अथवा नैसर्गिकन्यायातिरिक्तेन केनचित् मार्गेण भवितुं नार्हति ।

४.८ विश्लेषणात्मकविचारधारायाः समर्थकानां दृष्टिकोणोऽत्यन्तं संकुचितो वर्तते । अमुं स्थापयितुमपरिपक्वता स्पष्टैव । न्यायप्रशासनस्य दृष्टिकोणतोऽपि एतत् अपूर्णम् भवति । दृश्यते यत् यत्र धर्माधिकारिणां रुचि-स्वतन्त्रता विषये प्रश्न उदेति, तत्र तु विधानसभाभिरपि तदर्थं क्षेत्रं दीयते, यत्र यथा स्वेच्छातः स्वन्यायभावनातो वा प्रभावितो भूत्वा न्यायकर्ता कमप्यादेशं दास्यति अथवा कमपि निर्णयं करिष्यति । एतत्तु मन्यते यत् अद्यत्वे प्रामाणिकरूपेण एतत् स्वीकृतं यत् धर्माधिकरणस्य रुचि-स्वातन्त्र्ये काचित् स्वेच्छाचारिता नास्ति, तत्रापि कश्चन स्थिरसिद्धान्तो वर्तते । यस्य अतिक्रमणेन रुचि-स्वातन्त्र्यस्य आधारे पोषितो निर्णयोऽपि उच्चतरन्यायालयेन निलम्ब्यते । तथापि अस्मिन् सीमितप्रयोगे धर्माधिकरणस्य न्याय-भावना तु कार्यं कुर्यात् अपिच निर्णयस्य आदेशस्य च उपरि प्रभावोऽनिवार्यतया तिष्ठेत् । पुनश्च सांप्रतिकेयुगे यदा प्रशासकीयविधानानां प्रयोगः प्रत्यकसभ्यदेशे अस्ति, तत्र स्पष्टतया अनेकार्थिककायिकस्वतन्त्रताविषयकप्रश्नोपरि न्यायकर्तुः प्रशासकस्य वा न्याय-भावनामाधृत्य निर्णयः क्रियते इति । अतएव संप्रति यदा वैधिकभावनाः एकोनविंशशताब्द्यां कतिभिः गणैः अधिकाः विकशिता भवन्ति । तदाऽपि

आँस्तिनमहाभागेन यस्य आदर्शस्य पृथक्करणस्वप्नः दृष्टः स न केवलम् अपूर्णः, अपितु अस्य विपरीतदिशा विधानस्य धारा तिष्ठति। अस्य कारणं तु स्पष्टमेव । विधानं समाजस्य आवश्यकताया पूर्तेः साधनम् । कस्याश्चन तर्कशास्त्रीयसंगतेः (Logical Coherence) माध्यमेन कदाचित् तिष्ठेत् कदाचित् न तिष्ठेत् । आँस्तिनमहाभागेन इयं धारणा कृता यत् विधानस्य निर्मातारो विधायकाः केनचिदंशेन नीतिशास्त्रेण प्रभाविता भवन्ति; किन्तु विधानस्य निर्माणानन्तरं धर्माधिकारिणः इतः पृथक् तिष्ठन्ति । पूर्णतया एतत् सत्यं न अवगन्तुं शक्यते । धर्माधिकारिभिः सततन्यायं नीतिं समाजस्य सुरक्षां चेति त्रिविधां भावनां समक्षं स्थापयित्वा निर्णयो दीयेत, यः विहितवधानशब्दनां कृते आवश्यकः स्यात्। यदा विधान-सभायाः अभीष्टस्य आविष्करणाय अवसर उपस्थितो भवति, एकस्याः धारायाः द्वीतियधारया सह संगतिरानेतुमागच्छति तदा कस्यचन वाद-विशेषस्य जटिलवार्ताया न्याय-सिद्धान्तः प्रवर्तयितुं शक्यते। विधानं यदा समाजस्य न्यायभावनायाः पश्चात् पतति एवं च तस्य परिवर्तनस्य संशोधनस्य च आवश्यकता अनुभूयते। तदा समाजस्य न्यायभावनायाः (Social morality) समर्थनं तिष्ठतीति स्फुटम्।

४.९ विधि-विवेचक-फ्रेडेरिक-पोलकमहाभागेन स्वीक्रीये प्रसिद्धे ग्रन्थेऽयं विषय उच्यते ।

४.१० अस्मिन् विषये पोलकमहाभागेन त्रयो दृष्टान्ताः प्रस्तुताः, यैः अस्मिन् विषये यथेष्टपरिप्रकाशः भवति । अत्र प्रथमदृष्टान्तत्वेन कथितं यत् कस्यापि चौर्यं न कर्तव्यम् इति । एतद् एकं नैतिकं सत्यमपि भवति । विधानेन अस्मै अपरिहार्यताऽपि प्रदीयते । यदि काचित् व्यक्ति अस्मिन् नीतिवाक्य विषये अवगत्यापि चौर्यकर्मणि प्रवर्तते तर्हि सा विधानेन दण्डिता भवति । समाजस्य नैतिकभर्त्सनाऽपि तया सोढव्या । तत्र सा लाञ्छित भवति अपमानिताऽपि भवति ।

अत्र नीतिशास्त्रं राज्यविधानं च एकस्मिन् स्तरे तिष्ठतः । द्वितीयो दृष्टान्त इतः पृथक् भवति, यः विधानेन मन्यते । परन्तु नीतिशास्त्रे तस्य किमपि स्थानं नास्ति । यथा मार्गोपरि गमनसमये प्रत्येकपथिकेन वामेन चलितव्यम् ।

यदि कश्चन पथिकः यानारोही वा अमुं नियममुल्लंघति तर्हि विधान-भंगनिमित्तं तस्मै दण्डो दीयते । अयं नियमः इंलण्डे, भारते तथा व्रिटिश-राष्ट्रमण्डले विद्यते । परन्तु फ्रांसदेशे शर्मण्य देशेच एतद्विपरीतो नियमो वर्तते । प्रत्येकपथिकेन मार्गोपरि गमनवेलयां निजस्व दक्षिणेन चलनीयम् । अस्य नियमस्य पृष्ठभागे किमपि नैतिकं चिन्तनं नास्ति । केवलं जनसौकर्याय एव निश्चितार्थं च एतद् वर्तते । पुनश्च, तृतीयदृष्टान्तरूपेण उच्यते यत् (Thou shalt not covet) परधनस्य वा प्राप्तये कामना न करणीया । अयम् एक इत्थं नियमः यो नीत्यर्थं धर्मशास्त्रार्थं च अतीवावश्यकः । परन्तु विधाने तस्य किमपि महत्वं नास्ति । यतोहि यदि कश्चन किञ्चित् राज्यमभिलषति यत् चौर्यं यावान् वा कश्चन अपराधो भवतु नाम । मनुष्यस्य मर्नास लोभभावना नैवोत्पादनीया । तथापि एतस्य कार्य-रूपसंपादनं न केवलं दुःसाध्यमपितु असाध्यम् । एतदर्थं कस्यचिदपि देशष्य विधाने एतस्य स्थानं नास्ति । यदि अयं विषयो विधान-सभया विधायकेन वा स्वीक्रियेत । तथापि यावत्पर्यन्तं विधानस्य आचरणद्वारा अवगमनाय काचित् व्यवस्था न भवति तावत्पर्यन्तमस्य किमपि फलं नास्ति । यदि बाह्याचरणे न अयं स्थापितो भवेत् । तथापि विशेषनियमस्य अधीनो भवेत् । एतदर्थं कथ्यते यत् यदि विधानं नीतिशास्त्रेण सह सम्बद्धं कर्तुं प्रयत्येत तर्हि तस्य सफलता तावत्पर्यन्तं लभ्येतेति । इयं External morality वा आचरणमूलकनैतिकता उच्यते न ततोऽधिकम् । पोलकमहाभागेन स्वग्रन्थस्य पादटिप्पण्यामस्मिन् विषये मनोरञ्जकटिप्पणी प्रदत्ता । एतदर्थमुच्यते गुरुणा छात्रा प्रति यत् यदि त्वं हृदयेन प्रवित्रो न भवसि तर्हि अहं त्वांवेत्रेण प्रहरामि । तदानीं स ज्ञातवान् यत् को विद्यार्थो हृदयेन शुद्धः कश्चन न शुद्धः यावत्पर्यन्तं तेषां हृदयस्य भावना कार्यरूपेण न परिणमति? भारतवर्षस्य इतिहासे केवलं महाराजेन अशोकेन एतादृशे समाजे राज्य-शासनेन धर्म-प्रचारार्थं चेष्टा कृता । यदा तेन नीत्युदेशः शीलालेखरूपेण जनतानां मध्ये प्रचारितः तदा तेन अस्य जनसाधारणानांव्यवहाराय धर्म-महामात्राणां नियुक्तिः कुता । किन्तु अत्र कल्पना कर्तुं शक्यते यत् धर्म-महामात्रोऽपि विरुद्धाचरणार्थं दण्डं दातुमर्हति । किन्तु, केवलं महाराजेन समस्तेभ्य उपदेशविरुद्धमानसिक

संपन्नानां जनानां कृते दण्डप्रणयनं स्वशक्तिबाह्यम्, परन्तु उपर्युक्ताः विषयाः, क्षेत्रद्वये पृथगपि, मूलतः एकः एव । अस्यअयं प्रभावो यत् समाजे प्रचलिता मर्यादा कदाचित् विधानस्य रूपं धारकयति तेन सह राज्य-विहितं विधानं जनधारणस्य नैमिकस्तरं परिवर्तयति, यथा अनेकानि युरोपियविधानानि भारते प्रवेष्टुं पारयन्ति, यानि विदेशसर्वकारेण अत्र प्रचलितानि । यानि, तद्देशसर्वकारेण, अत्र प्रचलितानि, अत्रत्यं नैतिकं चिन्तनं परिवर्तितम् । यथा सती-प्रथा । बालकानां गंगायां प्रवाहन मित्यादि । एवमनेकानि उदाहरणानि सन्ति । यदा समाजस्य सामान्यनैतिकभावना विधानैः परिवर्त्यते तदा पारस्परिकसम्बन्धो वर्तते । एवंप्रकारेण अनयोः अनेन प्रकारेण न्यायालयैः व्यापारिकमनुबन्धं नाशयद्भिः विवादैः सह संबन्धः रक्ष्यते । इदानीं व्यापारिकनीतेः भाषायामयं Commercial morality कथ्यते ।

४.११ विधानं न्यायस्य भावनायाः अस्तित्वं स्थापयति तत् यावत् वा अपरिपक्कं भवतु । किन्तु यदा सकृत् विधानं स्थापितं भवति, तदा पुनश्च विशुद्धविधानस्य प्रश्ने तस्य मन्तव्यं तिष्ठति । विधानेन नियमस्य प्रत्यक्षं परिपालनं भवति यत् विधान-संगतं वा विधानसम्मतं भवति । यदि विधानं कस्यापि विशेषप्रकारव्यवहारस्य निषेधं न करोति तर्हि तस्य नायम् अर्थः यत् एतत् समीचीनमिति । राज्येन अनेन प्रकारेण बहुषु विषयेषु हस्तक्षेपः न क्रियते । यदिवा राज्यं तस्य कृते प्रतिवादस्य मुद्रा भवति । एतदपि कारणं स्यात् यत् हस्तक्षेपेन लाभापेक्षया हानिरधिका भवति । अस्मिन् विषये न्यायस्य आदर्शो नास्ति ।

दान्तेमहाभागेन राज्याय मनोदशा "गार्दापासा" नाम्नाऽभिव्यज्यते । योऽन्यभाषायामपि अन्तर्निहितः । न्याय्यं, न्यायः अथवा एतत्समानभावसंपन्नाः नैतिकार्थाः अद्यत्वेऽपि प्रचुरतया औपचारिक प्रसंगेषु विलुप्ताः न जाताः ।



## पञ्चमोऽध्यायः
# विधिसिद्धान्तः वर्गीकरणसमस्या च

५.१. विधिशास्त्रमित्थमेको विषयो भवति, यस्य परिभाषा अत्यन्तं कठिना। अस्य विषयस्य सीमा-निर्धारणं ततोऽधिकं कठिनतरम्। यतोहि अस्मिन् समाजस्य विविधाः समस्याः इत्थमागत्य समापतन्ति, यत्, यदि कां सुनिश्चितां परिकल्पनामाधृत्य अस्य विषयस्य विभाजनं न क्रियेत तर्हि अयम् एकोऽत्यन्तं दुरुहः एवं सीमाहीनश्च विषयः स्यादिति। एतदर्थं प्रत्येकविज्ञाने शास्त्रे च किंचित् (Categories) वा वर्ग-निरूपणं कर्तव्यं तथैव विधिशास्त्रेऽपि तस्य आवश्यकता अधिकतया प्रतीयते। अतएव एतच्छास्त्रस्य स्वरूपग्रहणसमये एतत्प्रकारकप्रयन्तः निरन्तरतया क्रियते।

५.२ आँस्तिनमहाभागस्य अनुसारेण सारजोनहौलैण्डमहाभागेन विश्लेषणात्मकपद्धत्या अधिकारमाधृत्य एतद्वर्गीकरणं कृतं, यत् वैयक्तिकं सार्वजनिकं च अधिकारं कथयन्ति। (Right in Personam and Right in rew)। पुनश्च, तस्य वर्गीकरणस्य द्वितीय आधारो भवति पूर्वावस्थितोऽधिकारः एवं च शमनात्मकः उपचारात्मकाधिकारो (Antecedent or remedial right) वा। हाँलैण्डमहाभागेन एतत्करणस्य आवश्यकता प्रतीतिः कृता यत् व्यक्तिगतः सार्वजनिकश्च इति अधिकारद्वयं परस्परमित्थं संबद्धं य़त् उभयोः श्रेणीविभागो न समीचीनत्वेन प्रतिभाति। एवंप्रकारेण कस्याश्चन एतादृश्याः पद्धतेः स्वीकृतिरपि न सन्तोषवहा यया सर्वाः विधान-प्रणाल्योऽत्र मिलताः भवेयुः। पुनश्च विधानस्य विशुद्धाधारान् तेषां च विभिन्नव्यावहारिक रूपाणि सम्मेलयितुम् एका स्वतन्त्रा बृहती समस्या भवति। तथ्यानां सिद्धान्तेन सह मेलनम् एवं च सामञ्जस्योत्पादनं च नैका सरला प्रक्रिया।

५.३ अतः विधानं प्रथमतः अन्तर्देशीयत्वेन अन्ताराष्ट्रियत्वेन च भागद्वयेन विभज्यते। तदनन्तरं तयोः अपराधमूलकत्वेन, व्यवहारमूलकत्वेन प्रक्रियामूलकत्वेन च त्रिभिःभागैः विभागः क्रियते। यथा प्रत्येकसभ्यदेशस्य विधान-पद्धतिद्वारा प्रकट्चेत। पुनश्च व्यवहारमूलकविधानेषु कासांचन प्रधानपरिकल्पनानां स्थिरीकरणमभूत्।

५.४ यदभ्यन्तरे बह्वयः परिकल्पनाः आगच्छन्ति ताः सामान्यतः इत्थं भवन्ति । या विधिशास्त्रिभिः सम्यक्तया मान्यता दीयते ताः भवन्ति अनुबन्धः, उल्लंघनं, दायित्वम् अधिकारः, कर्तव्यम्, आगमः, कर्म, परिपाकः, वैधिकव्यक्तित्वं, सम्पत्ति-भावना, संपत्तिधारणम् अधिग्रहणं वा भोगः (Contract, tort, liability, right, duty, title, act, event, legal personality, property, possession) इति । तेन प्रकारेण वैयक्तिकानां सार्वजनीनहितानामाधारेण वर्गीकरणं भवति । पुनश्च एकं गौणं वर्गीकरणं भवति यत् पारिवारिकविधानं वैयक्तिकम् अन्ताराष्ट्रियविधानं व्यापारिकविधानं चेति पदैरभिधीयते ।

५.५ द्वितीयश्रेणिकेन तृतीयश्रेणिकेन वर्तमानयुगे अधिकं महत्वमेतदर्थं प्राप्तं यत् यातायातसौकर्य हेतोः तथा अन्यान्यानुषंगिककारणाच्च एकस्य देशस्य नागरिकाः अन्येषु देशेषु अधिकसंख्यया प्राप्यन्ते । अतएव, विवाहसंम्पादन-विवाह-विच्छेदोत्तराधिकारादिविषयकसमस्याः तसां विषये उत्तिष्ठन्ति, एवं च तासां समाधानं कांश्चन निश्चितसिद्धान्तानाधृत्य उतिष्ठति । तेन प्रकारेण इदानीमपि संभूयसमुत्थानादीनामधिकप्रचारात् तत्संबद्धविधानानामधिकावश्यकता अनुभूयते । तेन प्रकारेणेदानीम् अन्या एका श्रेणी भवति या श्रमिकसंहिता कथ्यते । यदनुसारमिदानीन्तनयुगस्य सुबृहदौद्योगिकसंस्थानेषु श्रमिकनियोक्तरं तथाच नियोजनस्वामिनमन्तरा श्रमिकसम्बन्धो नियन्त्रितो भवतिं, तस्य फलेन ते परस्परं अनुचितरूपेण क्षतिं न सृजेयुः । अस्मात् हेतोः व्यक्तिं प्रति कष्टं न भवति, एवं च राष्ट्रियहितार्थं सामग्र्युत्पादने प्रतिबन्धः नायाति । तेन सह संप्रति एका नूतनधारापि विधानस्य क्षेत्रे प्रचलिता दृश्यते या (Administrative Law) प्राशासनिकविधानमिति कथ्यते । अयं विभागः केवलं प्रशासकानां सैकर्यनिमित्तं नियमोपनियमानां संग्रहमात्रं न भवति, अपितु सांप्रतिकजीवनगतजटिलानां समस्यानां च बाहुल्यात् विधान-सभाभिः वैधानिकनीतीनां निर्धारणेन समस्यासमाधानं न भवति । कस्यचन वादस्य उपस्थितौ केवलं साधारणाधिनियमेन वादस्य समाधानाय सहायता न मिलति । अतएव विभागीयाध्यक्षेभ्यः नियमोपनियमनिर्माणस्य अधिकारःदीयते । येन स्थानीयायाः तत्कालीनस्थितेश्च अध्ययनं कृत्वा विभागीयाध्यक्षः कश्चन विशेषदेशं घोषयितुंशक्नोति यत् विधान-सभायाः स्वीकृतिं विना परिवर्तितपरिस्थितौ पुनः परिवर्तयतुं शक्यते ।

५.६ विधिशास्त्रे प्रचलिताःविचाराः रोमीय-विधानादृते सांप्रतिकविधि-शास्त्रिभिः व्यक्तिगतविधित्वेन (Law of Persons), विधेयता-विधित्वेन (Law of obligation) एवंसाम्प्रतिकंविधित्वेन (Law of Property) चेति वर्गीक्रियन्ते । परन्तु विधिशास्त्रिणा पैटिनमहाभागेन इदमपर्याप्तत्वेन मन्यते । यतोहि एवं प्रकारकवर्गीकरणेन इंगलैण्डदेशीयकमन-ल-परिकल्पनाऽपि सन्निविष्टा भवति ।

५.७ किन्तु एतत् सर्वदेशीयत्वेन न मन्तुंशक्यते । इंगलैण्डप्रभृतिषु देशेषु Quasi-contract वा Quasi-delict अर्थात् अर्थानुबन्धः अर्थक्षतिकरणं चेति सिद्धान्तत्वेन मन्यते, परन्तु पृथिव्याः अन्येषु देशेषु केवलं द्विप्रकारकः प्रधानभेदः स्वीकृतः यः विधानेनावस्थापितकर्तव्यं स्वेच्छाकृतकर्तव्यं (Duties imported by the law एवं, duties voluntary incurred) चेति कथितम् । एवंरीत्या अनुबन्धेन उत्पन्नं कर्तव्यं द्वितीयश्रेणिकम् अन्यप्रकारककर्तव्यं प्रथमश्रेणिकं च भवति । तन्मंतेन एतत्प्रकारकविभाजनम् असन्तोषजनकम् । एतदर्थं, मौलिकाधिकारः गौणाधिकारः (Primary right and Secondary right) अधिकोपयुक्तत्वेन विभज्यते । क्षतिंकरणम् अनुबन्धस्य सिद्धान्तश्च समानरूपेण अत्र रक्षितुं शक्यते । अधिकारः व्यक्तिगतो भवतु अथवा सर्वजनगतो भवतु तस्य उल्लंघनेन उल्लंघनग्रस्तजनस्य क्षतिपूर्तये वादोपस्थानायपूर्णोऽधिकारो विद्यते । आमेरिकादेशस्य प्रसिद्धविधिवेत्रा न्यायधीशेन होम्समहाभागेन मौलिकाधिकारस्य भेदः न स्वीकृतः । यतोहि. मौलिकाधिकारतुल्यवस्तुनः अस्तित्वं नास्ति । यथा यदि काचित्व्यक्तिः कथयेत् यत् न कश्चित् मम कुत्सां कुर्यात् इति । तर्हि अयं मौलिकाधिकारो न भवति । परन्तु यदि द्वतीया व्यक्तिः अनेन प्रकारेण तस्य विरोधे तस्य सुनाम्नि आघातं कर्तुं प्रयतेत, तर्हि अत्रायमधिकारः क्षतिपूर्तिं कारयेत् । स धर्माधिकरणे व्यवहारं सृष्ट्वा सुनाम्नोऽपहननकर्तुःपुरुषात् क्षतिपूर्तिं साधायत् । तेन अनेन मतेन सह स्वस्य असहमतिः प्रकटिता । तस्य मतेन उल्लंघन-कार्येऽपि मौलिकगौणाधिकारयोः भेदः समीचीनो वर्तते यथा अनुबन्धे वा संविदि च ।



## षष्ठोऽध्यायः
# विधानस्य परिभाषा

अस्मिन् विषये सर्वापेक्षया विशिष्टत्वेन एवं मौलिकत्वेन च विचारःएकोनविंशशताब्द्यां जंरेमीबेन्थैममहाभागेन तच्छिष्यप्रवेरण आँस्तिनमहाभागेन च कृतः । तयोर्मतानुसारेण विधानं राज्यस्य प्रभुत्वसंपन्नक्षमताच्छायाः मूर्तरूपमेव। यदि कस्यचन नियमस्य आधारस्य वा पश्चात् एतादृशी प्रभुत्वक्षमता न स्यात् अपिच राज्येन अनिर्वार्यतया इयं कस्य उपरि पातयितुं न शक्यते तर्हि सा विधानत्वेन कथयितुः न शक्यते। परन्तु आँस्तिनमहाभागस्य अस्याः परिभाषायाः अवगमनार्थमस्याश्च एव आशयस्य हृदयंगमार्थमस्य पूर्ववर्तिनां विचारकणां परिभाषायाः एवं च आँस्तिनपूर्ववर्तिविधिशास्त्रिणां विचारस्य च तुलना आवश्यकी, या यूरोपस्य भिन्ने-भिन्ने देशेऽस्माभिः लक्षीक्रियते ।

येन तेन प्रकारेण कस्याश्चन विशेषपरिकल्पनायाः परिभाषा एकः कठिनो विषयः यतोहि परिभाषायाः तात्पर्यत्वेन केषुचित् आधारसहितशब्देषु समस्ताः विषयाः आगच्छन्ति ये अस्याः परिकल्पनायाः विषये घटन्ते । अतएव, परिभाषा निरन्तरतया अपूर्णा तिष्ठति, पुनश्च काचित् परिभाषा अपेक्षाकृतपूर्णा चेत् त्रुटिहीना भवति । किन्तु एतत् आलोचकस्य दृष्टकोणोपरिकृतनिर्भरमास्ते। एतदत्र सम्भाव्यते यत् यदि काचित् विशिष्टा परिभाषा एकस्य काल-विशेषस्य कृते पर्याप्तत्वेन मन्यते। तर्हि सा पुनःद्वितीयकालार्थं युगार्थं वा पर्याप्त परिपूर्णा नावगम्यते। यतोहि तदा समीक्षकस्य दृष्टिकोणः परिवर्तितो भवति । एतत् काठिन्यं समस्तपरिभाषाभिः सह तिष्ठति । परन्तु विधानस्य परिभाषायामेतदधिकस्पष्टरूपेण दृश्यते । अत्रकारणं त्वेतदेव यत् विधानं सामाजिकजीवनस्य अगणितजटिलतायाः परिस्थितेश्च उपरि आलोकंपातयितुं य तते । अतःपरिभाषा अल्पशब्दविशिष्टा भवति, अर्थं पूर्णतया अभिव्यञ्जयति, स्थूलरूपेण प्रत्येकं वर्गमुपवर्गं च स्वस्मिन् समाहरति । अन्यप्रकारक परिभाषापेक्षया अधिकं दुष्करं भवति ।

एतत्तु सम्भाव्यते यत् परिभाषानाम्ना एतत् वर्ण्यताम् एवं च विविध-प्रकारकस्य विधानस्य गणना क्रियतां, किन्तु इयं परिभाषा न तर्कशास्त्रस्य नियमानुकूलपरिभाषा भवेत् । एवं न सरला सौकर्यपूर्णा वा ।

अनेन प्रकारेण परिभाषायाः केचन प्रकाराः भवितुमर्हन्ति । प्रथमतः दैविको वा प्राकृतिकः नियमः । यथा - पृथिव्याःपरिक्रमणं सूर्यस्य स्थिरत्वं, ग्रहोपग्रहादीनां च सूर्यमंडले प्रचलनं, जलस्य आनयनम्, अग्नेःदाहकशक्तिश्च, द्वितीयतः मानव-विधानं, यत् मनुष्येण सामाजिकतासंचालननिमित्तं समूहार्थं क्षेत्रार्थं देशार्थंवा निर्मीयेत । पुनश्च, विधानस्य आधारदृष्ट्या, अर्थात् युक्तिधर्मनीतिशास्त्रदृष्ट्या यः कश्चन विधानस्य आधारः उद्गमस्थानं वा भवत्, पुनश्च रीतीनां विधानानां निर्माणं, पूर्वनिर्णयदृष्ट्या । पुनश्च अनया घटनया कस्यचन विधानस्य समाजस्य उपरि कश्चन प्रभावःपतेत् । अन्ततो गत्वा विधानस्य लक्ष्यं किं भवति, इत्यस्य दृष्ट्याऽपि विधानस्य परिभाषा शब्दबद्धो भवितुमर्हति ।

अतएव, विधानं यत् विधि-विज्ञानस्य विषयोभवति एवं च येन समाजस्य प्राणिनां पारस्परिक सम्बन्धःसंचालितो भवति । तदपि नीतिशास्त्रस्य नियमाद् भिन्नमेव । नीतिशास्त्रस्य सम्बन्धो मनुष्यस्य अन्तरंगेण सह भवति एवं च इयं व्यक्तिं संचालयति । तेषामाचरणाय एतद् मापदण्डेमेकमुपस्थापयति । यस्य अवहेलनया व्यक्तिः समाजस्य दृष्ट्या अधःपतति यस्य प्रतिपालनेन इयं समाजस्य दृष्ट्या ऊर्ध्वं गच्छति । यदि कश्चन जनो सत्यवादी भवति, तर्हि समाजस्य अन्ये जनाः तमाद्रियन्ते, तस्य विपरीताचरणात् स निन्दापात्रं भवेत् । सत्यवादितया साधारणतः कोऽपि पुरस्कारो नैव लभ्यते न मिथ्याभाषणेन कोऽपि दण्डः, यावत्पर्यन्तं केनापि कस्यचन काऽपि हानिर्न भवति, सा शरीर-सम्बन्धिनी भवतु अथवा सम्पत्सम्बन्धिनी । नीतिशास्त्रस्य नियमाः मनुष्यस्य कृते कर्तव्यं सृजति । किन्तु विधानम् अधिकारं कर्तव्यं च सहैव संयुनक्ति । न्यूनानिन्यूनतया यत्र विधानेन अधिकारः सृज्यते तत्र तेन सह कर्तव्यमपि । यथा रामेण गोविन्दसकाशात् एका भूमिः क्रीता तर्हि गोवन्दस्योपरि रामस्य अयमधिकारः आगच्छति येन स गोविन्दात् तां तत्र भूमिं प्राप्नुयात् । किन्तु तेन

सह तस्यापि कर्तव्य भवति यत् स गोविन्दाय निर्धारितं मूल्यं परिशोधयेत् । अनेन प्रकारेण गोविन्दस्य अधिकारः कर्तव्यं च सहचलतः । किन्तु एतत् अवश्यं स्वीकर्तव्यं यत् एतेषां मौलिक भेदानां राहित्येऽपि साधारणतः व्यवहारे एकः द्वितीयतः पृथक् नैव स्थापयितुं शक्यते ।

केवलं विधानोपरि कृतनिर्भरो जनः यः (Home Juridicus) विधानमनुष्यः कथयितु शक्यते स शोभनीयः प्राणी न भवति । यावत्पर्यन्तं तस्य व्यवहारो नीतिशास्त्रानुमोदितो न स्यात् । विधानस्य आधार एवं च नीतिशास्त्रस्य मौलिकः सिद्धान्तः मिथः संपृक्तौ स्त इति विश्लेषणेन स्पष्टीभवति । विधानं बाधकनीत्या (Positive morality) सहापि न मिलति । विशुद्धादर्शप्रतिपादकनितिशास्त्रं बाधकनीतिं चान्तरा अयं भेदो यत् एकस्य सम्बन्ध आदर्शेन सह विद्यते एवं द्वितीयस्य क्रियात्मकाचरणेन सह यथा पित्रे सन्तानस्य पालनं धर्मः । स्त्रीपुरुषाभ्यां परस्परं प्रेम्णा सद्भावेन च वर्तितव्यम् । नीतेः एते नियमाः मनुष्यस्य आचरणेन सह सम्बन्धं रक्षन्ति, किन्तु साधारणतः यदि स्त्रीपुरुषयोः प्रेम न तिष्ठति । तर्हि विधानं स्वीयशक्त्या एतत् प्रेम नैव उत्पादयितुं शक्नोति । एवंप्रकारेण यदि विधानेन विधिवत् केषांचन शिशूनां पालन-पोषणार्थं धर्माधिकरणेन काऽपि व्यवस्था न कर्तुं शक्यते तर्हि पित्रोः अथवा द्वयोर्मध्ये केनाप्येकेन उपेक्षितत्वे यदि शिशोःमानसिकी अथवा शारीरिकी हानि र्भवति । तर्हि तस्माद्धेतोः पितरौ विधानेन दण्डितौ भवितुमर्हतः । बाधकनीतिं विधानं चान्तरा अयमेव भेदः । ऑस्तिनमहाभागस्य परिभाषानुसारं विधानार्थं त्रयो गुणाः आवश्यकाः, एकः संघटितराजीतिक समाजः । अस्मिन् समाजे प्रभुत्वसंपन्नक्षमतायाः अस्तित्वं, यस्य आज्ञाया पालनम् अभ्यासतः समग्रसमाजस्य जनाः कुर्वन्ति, एवं च ये स्वयं कांचन आशां पालयितुं न प्रवर्तयन्ति । ऑस्तिन महाभागस्य परिभाषाया एकस्यां दिशि विधानस्य अस्मिन् अंशे गुरुत्वमाधीयते यत्र विधानस्य बाधकशक्तौ एवं च तस्याः व्याघातावस्थायां राज्येन दण्डोऽथवा क्षतिपूर्तेः विधानं भवति । यस्य महत्वं कस्यामपि स्थितौ विस्मर्तुं न शक्यते, एवं च अन्यस्यां दिशि संघटित समाजस्य महत्वम् । एतत् प्राध्यापकेन ऐलेनमहाभागेन विधानस्य आज्ञामूलकम् (Imperative) अंगमिति

कथ्यते । किन्तु परिभाषारूपेण एतस्य पर्याप्तत्वेन अवगतये किंचित् काठिन्यं भवेत् । एतत्भवति ऐतिहासिकम्, यतोहि प्रायेण दृश्यते यत् कदाचित् प्रभुत्वक्षमतायाः स्थापनात् पूर्वमितरविधानस्य व्यवस्था समाज-विशेष आचाररूपेण स्वीकृता तिष्ठति । पुनश्च राज्यस्य प्रभुत्वक्षमतातःऋते कदाचित् चर्चद्वारा कदाचित् वणिक्संघेन कदाचित्सामन्तानां भूमि-सम्बन्धिनियमैः एवं च रोमस्य विधानेन अथवा स्मृतिकाराणां संगृहीतवाक्यैरपि विधानरूपेण स्थानं प्राप्यते । अतएव नृतनत्त्ववेतृभिः (Anthropologists) राज्यचिन्तमस्य उदयात् पूर्वमादिमविधानान्यपि विधानसंज्ञया अभिधीयन्ते । अनेन प्रकारेण विधानस्य उद्गमस्थानं मूलस्रोतोवा कुत्र ? ततोऽधिकं बलं तैः विधानस्य कार्यकारितायैः प्रदत्तम् ।

आँस्तिनमहाभागस्य उपर्युक्तपरिभाषोपरि कियती वा आलोचना कृता तथापि अपूर्णा मन्यते । यथा एतत् कथ्यते यत् इंगलण्डदेशे संयुक्तराज्ये अमेरिकादेशे वा लिखितसंविधानादृते काचित् मान्यता आगता यत् Convention's कथ्यते । तस्यायं प्रभावो लिखितसंविधानस्य । परन्तु, एतासां सर्वासामालोचनायामुत्तरमेतदेव यत् एते सर्वे एतदर्थं स्वीक्रियन्ते यत् विधयिकाशक्त्या ऐतेस्वीकृताः एवं प्रकारेण, अन्ताराष्ट्रियविधानम् आँस्तिनमहाभागः एवं च तस्य समर्थकाः न मानयन्ति । यतोहि तस्य पृष्ठभागे एतादृशी काचित् अन्ताराष्ट्रिया प्रभुत्वक्षमंता नासीत् यथा तदुल्लंघयितारं दण्डयितुं शक्नुयात् । एतेन तत्प्रभावितराज्यं निजस्वबलोपरि अस्थां रक्षित्वाऽग्रे सरेत् । संयुक्तराष्ट्रसंघेऽद्यावधि ईयं शक्ति नैवागता । अतएव, अन्ताराष्ट्रियविधानमिदानीं केवलं शिष्टाचारमात्रम् ।

एतस्या उत्तरमेतद्भवितुमर्हति यत् अन्ताराष्ट्रियविधानस्य एतद् अङ्गं भवति यत् व्यक्तिगतन्ताराष्ट्रियविधानमिति कथ्यते, एतत् सर्वाणि राष्ट्राणि स्वीकुर्वन्ति । एकस्य देशस्य नागरिकस्य द्वितीय देशस्य नागरिकेण सह स्थाप्यमानव्यवहारविषये यः प्रश्न उत्तिष्ठति तमेतदाधारेण धर्माधिकरणानि समादधति । अस्य स्थानमन्तर्देशीयविधानात् केनापि प्रकारेण न्यूनं न भवति । यदि प्रभूसत्ताधारिण्या कयाचित् संस्थया एतत् न प्रचारितं स्यात् ।

एतदर्थमन्ताराष्ट्रियविधानस्य अयं द्वितीयः पक्षः आँस्तिनमहाभागस्य परिभाषां स्पष्टं खण्डयति।

इदानीमवशिष्यते सार्वजनीकमन्तराष्ट्रियविधानम् । अस्मिन् विषये विधिवेत्तुः केलसन महाभागस्य सम्मतिरियमेवयत् अन्ताराष्ट्रियविधानं विना अन्ताराष्ट्रियंसमाजस्य कल्पना न भवितुमर्हति। स समाजः स्थातुं न शक्नोति। किन्तु एतद् एकं नितान्तं सत्यं यत् ये प्रभुत्वक्षमतासंपन्ना देशाः तेषु मतभेदो भवति । सर्वस्मिन् समये तेषां मतभेदं नीत्वा संघर्षो न भवति। सामान्यतः ते शान्तिपूर्वकन्याय-सिद्धान्तस्य मौलिकतया स्वीयमतभेदं दूरयन्ति । अनेन अयं निष्कर्षः पूर्णतया पुष्टो भवति यत् अन्ताराष्ट्रियविधानं मूलतः विधानमेव भवति। यद्यपि तस्य स्वरूपं सर्वत्रलिखितं नास्ति । अनेन अर्थेन केलसनमहाभागः संप्रति अन्ताराष्ट्रियविधान-सिद्धान्तस्य प्रवर्तकस्य ह्यगोग्रीशियसमहाभागस्य अनुयायी, यस्य सिद्धान्तः आसीत् Ubisocietas ibe lus। एतदर्थम् अस्य विधानस्य अस्तित्वमस्ति। विश्वस्य जनमतस्य अस्तित्वं सांप्रतिकयुगस्य एकं नवीनं वस्तु। इदानीन्तनसभ्ययुगे यातायातसाधनं विश्वस्य कोणे कोणे समाचारस्य विभिन्नदेशानां समाचारपत्रेषु प्रकाशनं, विश्वव्यापिसमाचारसंस्थानां स्थापनेति सामान्या घटना । तस्यामवस्थायां विश्व-जनमतस्य अवहेलना न कार्या। तथा च यदि अन्यत् क्रिंचित् अधिकं न स्यात् तर्हि एतत् लोकमतम् अन्ताराष्ट्रियविधानस्य एकः सुदृढ आधारः इतिं मन्यते।

अत्रायमेकः प्रश्नो भवति यत् आन्तरिकविधाने अथवा देश-सीमित-विधाने एवं च अन्ताराष्ट्रियविधाने किंवा प्रधानत्वेन मन्यते वा तस्य पारस्परिकसम्बन्धः कः इत्यपि अन्ताराष्ट्रिय विधानस्य सिद्धान्ते एको विवादास्पदः विषयः। केषाञ्चन विचारकाणामयं निर्णयो यत् एतयोः सम्बन्धः स्पष्टः । द्वयोर्मध्ये कोऽपि विरोधो नास्ति । यतोहि देश-सीमितविधानानि प्रजानां पारस्परिक विवादसमाधानाय भवन्ति। अन्ताराष्ट्रियविधानमेकस्य देशस्य द्वितीयदेशेन सह विवादं समाधत्ते। किन्तु अस्योपरि इयमापत्तिः क्रियते यत् विधानस्य एवंप्रकारकद्विधाकरणं तर्कदृष्ट्या तथा विधानस्य समाजे सर्वोपरि भविष्यं न मिलति । अतएव सिद्धान्ततः एतत् निश्चेतव्यं यत् द्वयोःकस्य

प्राधान्यमिति भवति, तथा सति यथा अनयोःकदाचित् विरोधो दृश्येत, तदा एतत् निश्चीयेत यत् कस्य सिद्धान्तस्य नियमशासकेन स्वीक्रियेत एवं च कः अधीनो भवेत्। एवं न स्याच्चेत् बहुप्रकारसमस्या उत्पद्येरन्। कैश्चन विचारकैः देश-सीमितविधानस्य प्राधान्यमङ्गीक्रियते, एवं च अन्ताराष्ट्रियविधानस्य देशस्थसर्वकारेण अनुमोदनात् मान्यत्वमायाति। अतएव आन्तरिकविधानस्यैव प्राधान्यम् । अन्ताराष्ट्रियं गोणमेव । किन्तु अन्ताराष्ट्रियविधानस्य प्राधान्यसमर्थकैः एतत् बालुकानिर्मित भवनसादृश्यं मन्यते । यतोहि यदि अन्ताराष्ट्रियविधानं राष्ट्रस्वीकृत्युपरि आधारितम् । तर्हि या शक्तिः स्वीकृतिं घोषयति साऽपि तत् दूरयितुमर्हति। एवमस्यामवस्थायाम् एतादृशस्य विधानस्य कोऽपि आधारो नैव तिष्ठेत्। तथा च एतदपि दृश्यते यत् यदा कस्मिंश्चिदपि देशे एकः सर्वकारोऽपास्तो भवति। तस्य स्थानं गृह्णता सर्वेकारणाऽपि अन्ताराष्ट्रियघटनासु तद् विधानं विना या काचित् आपत्तिः सरलतया मन्यते, यत् तत्रत्यपूर्ववर्तिना सर्वकारेण स्वीकृतमेव ।

एवं प्रकारेण एततृस्पष्टं यत् अनयोःद्वयोः प्रतिस्पर्धिनोः कल्पनयोः तुलनानन्तरं विश्वशान्तिस्थापना दृष्टचा तथा अन्ताराष्ट्रियविवादानां सम्यक्समाधानहेतोः अन्ताराष्ट्रियविधानस्य प्रधानतां मानयित्वा अवस्थानं श्रेयस्करम्। किन्तु एतदपि अस्वीकृतं न कर्तुं शक्यं यत् पर्याप्तप्रयत्नानन्तमपि अद्यावधि अन्ताराष्ट्रियविधानस्य अनिवार्यरूपेण विवादसमधानाय प्रचलनार्थं कश्चन माध्यमो न प्रस्तुतः । "परमानेण्टकोंट आफ इण्टरनेशनालजस्टिस्" अथवा कोर्ट अफ इण्टरनेशनाल जष्टिस सदृशाः न्यायलयाः, येषां स्थापनं राष्ट्रसंघेन कृतं तेषां समक्षं कस्यपि अन्ताराष्ट्रियविवादस्य अनिवार्यतया उपस्थिति नैवभवितुमर्हति । अपि च तेषां निर्णयः यदि केनापि पक्षेण न मन्यते तर्हि प्रसभं प्रवर्तयितुं कश्चन मार्गःस्यात्। विधिःकेन प्रणीयेत इति यद्यपि राष्ट्रसंघेन अंगीकृतः नियमःक्रियते, एवंच तद्वत् संयुक्तराष्ट्रसंघस्य आदेशपत्रेण स्वीकृतः स्यात्, तथापि सर्वाणि राष्ट्राणि तं न मानयन्ति। अतएव अद्यत्वे अन्ताराष्ट्रियविधानस्य वास्तविकमहत्त्वं प्राचीने काले उत्पन्नाचारेभ्योऽधिको न भवति। एवं च यथा लोकाचाराणां राष्ट्रस्वीकृत्या वैधक्षमता आगच्छति इयं स्थितिः इदानीमपि

अन्ताराष्ट्रियविधानस्य वर्तते । अस्य प्रमाणं तदा प्राप्तं यदा हिटलर-यवन शासिताधिनायकवादिभिः शर्मण्यइटलीप्रभृतिदेशैः अन्ताराष्ट्रियविधानानां माननाय न माननाय च स्वेच्छोपरि अवलम्बनं कृतम्, एवं च अन्येषु देशेषु शासनविरोधिदलानां कृते प्रोत्साहनप्रदानम् अन्ताराष्ट्रियविधानान्तर्गतं मन्यते । एवंप्रकारेण एतैः स्वीयमनोऽनुसारं परिभाषा प्रदत्ता । अस्मात् कारणात् प्रसिद्धेन अन्ताराष्ट्रियविधानज्ञात्रा लॉटरपाकट (Lauter pacht) महाभागेन कथितं यत् कस्यापि नियमस्य विधानमर्यादाप्राप्तिनिमित्तमावश्यकमेत्तदेव यत् एतस्य निर्माणं प्रभूत्वक्षमता प्राप्तसंख्यया स्यात् । एतस्य पालनमित्थं न्यायलयेन क्रियेत यस्य कार्यान्वयनं पक्षद्वयेन बलप्रयोगेण क्रियेत । पुनश्च एतत्तु सत्यं यत् अनयोःद्वयोः यदि एकस्य अभावो भवेत् तथापि नियमत्वेन वक्तं शक्यते । परन्तु यदि द्वयोरभावो भवति तर्हि एतादृशो नियमः यः पक्षद्वयेन ज्ञायेत एवं च यः कस्यचन विशिष्टविवादस्य समाधानाय प्रयोज्यते तथापि तस्य विधानसंज्ञा न भवितुमर्हति स यावान् वा आचारप्रभवो भवतु । अतः अन्ताराष्ट्रियविधानस्य विधानसंज्ञादानाय विश्वजनमतस्य एका एतादृशी संख्या निर्मातिव्यासा स्वेच्छयाभवतु अथवा अनिवार्यतया भवतु । अतः अन्ताराष्ट्रियविधानस्य विधानसंज्ञादानाय विश्वजनमतस्य एका एतादृशी संख्या निर्मातव्या सा स्वेच्छया भवतु अथवा अनिवार्यतया भवतु । या एतत् विधानं प्रचारयति अथवा तस्य पालनाय तत्र शक्तरस्ति । स एकया विश्वं-संसदा वा विश्व-सर्वकारणेन वा संभाव्येत । किन्तु यावत्प्रर्यन्तम् एतत् ध्येयं प्राप्तं न भवेत् तावत्पर्यन्तमयमपि सन्तोषस्य विषयो भवति यत् क्रमशो मानवजातिः अनया दिशा अधिकाधिकतया अग्रसरा भवति; यतोहि राष्ट्रसंघेन यावान् अधिकारःप्राप्त आसीत् अथवा यःतस्यपरिधिरासीत् ततोऽधिकाधिकारः एवं च ततः अधिकविस्तृतपरिधिसंयुक्तराष्ट्रसंघस्य भवति । चीनदेशादृते विश्वस्य समस्तराष्ट्राणि एतस्य सदस्या भवन्ति, यदा राष्ट्रसंघे संयुक्तराज्यामेरिकादेशः एवं च रूसदेशश्च सम्मिलितौ न आस्ताम् ।

विधानस्य परिभाषा अनेन दृष्टि-विन्दुनापि क्रियते यत् यस्य नियमं न्यायलयो मानयति तदेव विधानम् । यतोहि व्यवस्थापिकासभया निर्मितं

विधानमपि स्पष्टतया अनिश्चितरूपरेखामात्रम्। एवं च यावत्पर्यन्तं विशेषो वाद उपस्थितो न भवति न्यायालयश्च तस्य उपरि निर्णयं न घोषयति तावत्पर्यन्तं निर्धारितरूपरेखायाः कश्चन अर्थः निःसरेत् इति एतत् न वुक्तं शक्यते। एतदर्थम् आमेरिकादेशस्य प्रसिद्धन्यायाधीशेन तत्त्ववेत्रा हेम्समहाभागेन विधानस्य इयं परिभाषा प्रदत्रा यत् न्यायालयेन अनन्तरं को निर्णयो दीयते, तस्मिन् विषये पूर्वज्ञानं सम्मतिश्च विधानं भवति, नान्यत् किमपि । इयं परिभाषा किंचित् त्रुटिपूर्णा भवति । यतोहि भविष्यद्दृष्टिः परिणामस्य कल्पना च विधानं न कथ्यते। यदि एतत् भवेत् तर्हि प्रत्येकविधानवेत्तुः स्वसम्मतिरेव विधानं स्यात्। एवं च यावन्तः विधानवेत्तारः कस्यचित् विशिष्टविषयोपरि स्वीयांभिन्नां भिन्नां यावतीं सम्मतिं दद्युः विधानस्य तावती रचना भवेत्। किन्तु एतत् सर्वविदितं यत् विधानं विधानवेतॄणां न सम्मतिः, प्राड्विवाकानामपि न स्वीयनिष्पत्तिः ते यावन्तोऽनुभविनो योग्या वा भवन्तु। वरं यं न्यायधीशोऽधिकरूपेण स्वीकरोति एवं च यस्य आधारेण वादस्य निर्णयं करोति तदेव विधानं कथ्यते। तत्र च यः सर्वोच्चन्यायालयो भवति, तस्यैव निर्णियो विधानं भवति, न द्वितीयस्य कस्यचन पक्षः विशेषस्य एतत् मान्यं भवति, यदि तेन निर्णयस्य विरोधे पुनर्विचाराय याचिका न उपस्थापिता । अनेन प्रकारेण, यद्यपि इयं दृष्टिः इदानीम् आमेरिकादेशेऽतीव लोकप्रिया भवति इयं च यथार्थ वादिनी उच्यते तथापि इयं त्रुटिपूर्णा दृष्टिः भवति । विधानं व्यवस्थापिकासभायाः अनुमतिमन्तरा न्यायालयस्य निर्णयेन तस्य समक्षं स्वीकरणमनुचितम् । यदा एतत् प्रायेण दृश्यते यत् यदा कदाचित् न्यायालयस्य निर्णयः एवंप्रकारेण भवति । यत् विधानसभया स्वाभीष्टप्रतिकूलत्वेन ज्ञायते। तदा विधाने आवश्यकसंशोधनं क्रियेत। पुनश्च अद्यत्वे प्रशासनाधिकारिणां मन्त्रिणां च हस्ते केषांचन विधान-विशेषाणां प्रचलनाय इयती स्वतन्त्रता प्रदत्ता । अतः परं कोऽपि असन्तुष्टः पुरुषः न्यायालयस्य समक्षं नैव अनीयेत । यतोहि न्यायालयः तदुपरि निर्णयदानाधिकारात् वञ्चितोऽस्ति ।

विधानस्य वास्तविकं लक्ष्यं किम् ? अनया दृष्ट्यापि विधानस्य परिभाषा दातुःशक्यते । एतदनुसारं विधानन्याययोः

अद्वरसम्बन्धस्थापनस्याधारेण एतत् कथितं यत् विधानमेषां सिद्धान्तानां मूर्तरूपमेवयत् केनाचित् राज्येन वा देशेन वा न्याय-प्रशासनार्थमंगीक्रियते। विधिशास्त्रिणा सौमोण्डमहाभागेन एवंप्रकारेण विधानस्य परिभाषा प्रदत्ता। यद्यपि अस्यां परिभाषायामेकं गभीरं सत्यमस्ति। तथापि अत्र वास्तविकतादृष्ट्या काश्चन त्रुटयः सन्ति। यथा इदानीं दक्षिणाफ्रिकासर्वकारेण शरीरवर्णभेदाधारेण भिन्नभिन्ननागरिकाणां कृते पृथक् विधानं प्रणीयते यत् विश्वस्य प्रधानजनमतमन्यायपूर्णं, बर्वरं, पश्चाद्गामि तथा प्रतिक्रियावादि च मन्यते। किन्तु एतादृशानि विधानानि सर्वकारस्य मान्यताप्राप्तानि भवन्ति। अतएव एतत् कथनमन्यन्तं कठिनं यत् न्यायविरुद्धत्वेऽपि इयं व्यवस्था विधानं न भवति। एवंप्रकारेण रोमस्य दास-प्रथाऽपि आसीत्। अद्यापि बहुविवाहप्रथा प्रवृद्धजनमतेन दोषपूर्णत्वेन मन्यते। किन्तु केनचित् समाजेन एतद् विधानमुचितं मन्यते। हिन्दु-विवाह-विधि (१९५६) प्रणयनात् पूर्वमेतत् आसीत्। इदानीं यवन-समाजे एतद् वर्तते।

परन्तु एतत् अस्वीकृतं नैव स्यात् यत् विधानन्याययोः सम्बन्धः अधिकनिकटतमसम्बन्धो भवति। विधानं प्रत्येकावस्थायां न्यायसिद्धान्तो न वर्तते। विधानं बाह्याचरणस्य वस्तु। न्यायो मनुष्यस्य नैतिकबुद्धिं प्रकृतिं च अवलम्बते। परन्तु विधानस्य औचित्यं न्यायस्य तुलादण्डेन तोल्यते। तदनुसारं तत्र आवश्यकपरिवर्तनं भवति। यदा समाजस्य कश्चनं विषय-सम्बन्धी न्यायादर्शः परिवर्तते। एतदर्थं लॉर्डराइटमहोदयेन स्वस्य ग्रन्थे स्वमतं प्रकाश्यते यत् "मया एतस्य मतस्य स्वीकारे किञ्चित् असौकर्यं नानुभूयते यत् प्रत्येकन्यायाधीशेन व्यवहारस्य निर्णये न्याय-भावना मार्गप्रदर्शकसिद्धान्तरूपेण मन्यते। एतत्कथने मदुपरि दोषारोपणं भवेत्। अयं न्यायो विधान-सम्मतो भवतु, परन्तु इयं न्यायभावना भवतु। मया न्यायस्य काचित् सर्वग्राह्या परिभाषा नैव दातुं शक्यते। कस्मिंश्चित् न्याये यो वा न्यायो भवतु तस्य मापदण्डो वर्तते। कस्यचन न्याय प्रियमनुष्यस्य तस्मिन् विषये काचित् न्यायोचितधारणा स्यात्। इयं युक्तिसंगतभावेनोच्यते या युक्तिप्रियमनुष्येण उचितत्वेन अवगम्यते। मया तु एतदेव ज्ञायते यत् विधानस्य परिभाषायां सर्वापेक्षया अधिकसन्तोषप्रदा

परिभाषा इयमेव । एवं च अवशिष्टपरिभाषाकेवलम् आलोचनात्मिका भवति न रचनात्मिका ।

अस्यामालोचनात्मकपरिभाषायामेकं मतं दार्शनिकानां वर्तते यत्र प्रमुखं स्थानं काण्टमहाभागस्य वर्तते । तस्य मतेन विधानस्य द्वे अंगेस्तः, एकं तस्य विश्वसम्मतसिद्धान्तेन सह संम्बद्धं यत् केनापि रूपेण सम्पूर्णमानव-समाजे लभ्यते, द्वितीयं च तस्य बाह्यरूपं यत् सांसारिकं सामान्यसामाजिकानुभवादुत्पद्यते । विधानस्य प्रकृतलक्ष्यावधारणाय सांसारिकविधानपद्धतिं परित्यज्य विशुद्धविचारजगति तस्य गूढत्वस्य अन्वेषणं कर्तव्यम् । किन्तु एतदपि स्पष्टं यत् कस्याश्च न जटिलतायाः हेतोः अयं दार्शनिकदृष्टिकोणः न्यायविधानयोः दिशि गच्छति । यथा शर्मण्यविधिवेतुः स्टैमलरस्य विचारधारात् प्रकटितं भवति। तस्य न्याय-सिद्धान्तः (Theory of Justice Rechts Philosophie) इति ग्रन्थेऽयं विषयः स्पष्टः ।

फ्रांसदेशस्य विधिवेत्रा ह्युग्विमहाभागेन समाजस्य कल्याणे विधानस्य प्रतिपत्ति चरितार्था भवति इति मन्यते । एतदर्थं तेन दार्शनिकानामागमसिद्धान्तस्य आधारेण विधानस्य परिभाषा त्रुटिपूर्णेति मन्यते । एतदर्थं नीतिशास्त्रम् अध्यात्मशास्त्रं च स विधान-शास्त्रात् नितान्तं भिन्नं मन्यते । स च विधानस्य औचित्यम् आधारं च गृहीत्वा समाजस्य सामान्यप्रवृत्तेरध्ययनम् एवं च पुरुषस्य सौख्यं सौकर्यं च मनुतें । यदा किञ्चित् विधानं समाजस्य लोकमताय बहुसंख्यकव्यक्तिनिमित्तं च कष्टदायकं ज्ञायते तदा तत्र परिवर्तनं भवितव्यम् । एतस्य सिद्धान्तस्य इयमेव त्रुटिः यत् जनमतस्य पश्चादपि न्यायभावनायाः सत्वात् जनमतस्य सार्थकता तिष्ठति । अतएव, केवलं जन-भावनायाः आधारेण किमपि वैधिकं परिवर्तनं न भवितुमार्हति । निष्कर्षोऽयमेव यत् कियती वा आलोचना भवतु न भवतु वा, किन्तु यावत्या दृष्ट्या विधानस्य परिभाषा भवतु, तत्र शीर्षस्थानमस्याः परिभाषायाः, यः विधानन्याययोः सम्बन्धं मानयति एवं च येन विधानं समाजे प्रचलितन्याय-भावनायाः द्योतकत्वेन मन्यते । समस्तप्रकारकपरिभाषाः अन्ततोगत्वा तत्रैव मिलन्ति । एतस्य आधारेण समये समये विधानस्य परिवर्तनं भवति, एतस्य परिवर्तनस्य यः कश्चनविषयो भवतु ।

विंशशताब्द्याः प्रारंभे द्वयोःमहायुद्धयोरनन्तरं कल्याण-राज्यस्य भावनायाः एवं च तदीयोद्देश्यप्राप्तये च स्वीकृतानि बहुसंख्यकविधानानि परिलक्षितानि भवन्ति, येषां कल्पनाऽपि एकोनविंशशताब्द्याः पूर्वं नैवाऽसीत्। ग्रेमहाभागेन विधानस्य वास्तविक स्वभावसम्बन्धे निम्नलिखितं मतं प्रकाश्यते यत् मम सम्मतौ सम्यक् सूचना इयमेव यत् न्यायाधीशेन यत् निश्चीयते तदेव विधानं भवति। विहित विधानं, पूर्वनिर्णयः, विशेषज्ञानं, सम्मतिः, आधारनीतयश्च विधानस्य स्रोतोमात्रम्। तानि अनु समाजं शासतां पुरुषाणां सम्मतिरस्ति या स्वस्य इच्छया एतेषु किमपि अवरोद्धुं शक्नोति। किन्तु यावत्पर्यन्तं ते पुरुषाः अत्र हस्तक्षेपं न कुर्युः न्यायाधीशाः विधानस्य स्थापनायामेतेषां सोतसां सहायतां गृह्णीयुः। होम्समहाभागः स्वनिबन्धे विधानस्य मार्ग (The path of the law) नामके ग्रन्थे विधानस्य निर्माणे न्यायालयस्य प्रभुतासम्बन्धे कथयति यत् न्यायालयः वस्तुतः किं कुर्यात्? तस्य भविष्यवाणीमेवाहं विधानं मन्ये। इतोऽधिकमहत्वपूर्णं किञ्चित् द्वितीयमुद्देश्यं नास्ति।

अस्य आधारस्य इयमेव दृष्टिः यत् यो निम्नप्रवृत्तिसंपन्नो नागरिको विधानस्य चक्रे पतति सोऽस्मिन् विषये लेशमात्रं न चिन्तयति कया प्रक्रियया कया युक्त्या किंचित् विशेषविधाननिष्कर्षो निष्पद्यते, वरमेतत् ज्ञातुं शक्नोति यत् यःकश्चन न्यायालयोऽस्मिन् विषये विचारयेत् तदुपरि कं निर्णयं घोषयेत्। अन्यत् सर्वं व्यर्थम्।

भारतीयमते विधानं केवलं भौतिकरूपेण कदाऽपि न मन्यते। विध्यर्थे धर्मशब्दस्य प्रयोगो भवति। शतपथब्राह्मणे धर्मः राजा इति कथितम्। अस्येदं तात्पर्यं यत् विधानं धर्मः राज्ञोऽपि राजा भवति। तस्मात् कश्चित् अधिकतया सामर्थ्यवान् दृढोवानस्ति। विधानात् अधिकतया किमपि वस्तु नास्ति यस्य सहायतया दुर्बलोऽपि सबलस्यविरोधे स्थातुं शक्नोति। धर्मो राजाधिराजो भवति।

तैत्तिरीयश्रुतौ धर्मस्य परिभाषा तस्य शक्तिश्च वर्णिता। धर्मो विश्वस्य जगतः प्रतिष्ठेति धर्मः समस्तस्य संसारस्य आधारः। यदि धर्मस्य पालनं न भवेत्, तर्हि विश्वे उच्छृंखलता परिव्याप्ता भवति। तर्हि कोऽयं धर्मः इति?

धर्म ईश्वरद्वारा उच्चरितशब्दः तेन श्रेयसः प्राप्ति र्भवति। यत् ईश्वरेण कथितं सत्यं न भवति, तस्य पालनमनावश्यकम् । धर्मस्य शब्दमूलत्वात् अशब्दमनपेक्ष्यं स्यात् । श्रेयः तथा प्रेयश्चेति वस्तुद्वयम् । यःप्रेयसो वरणं करोति तत्र स कल्याणं नैव प्राप्नुयात् । यःश्रेयः वरयते स तत् प्राप्नुयात् । अन्यच्छ्रेयोऽन्यदुतैव प्रेयः । उभये नानार्थपुरुषं चिनुतः श्रेय आददानस्य साधुभवति। हीयते अर्थाद् यत्तु प्रेयो वृणीते इति। तर्हि विधानस्य मूलाधारो धर्मएव यस्य उत्पत्तिः ईश्वरात् भवति, येन विश्वमिदं रचितम् । परन्तु यदा राजनि तस्य व्यक्तिगतकर्तव्यात् ऋते अयंभारःस्थापितः यदा केनचित् अन्यं प्रति स्मृत्याचारविपरीतमाचरणं क्रियते उत्पीडितःप्रतिकाराय राज्ञिनिवेदयेत् तदा। अस्मादेव वर्तमानार्थे विधानस्य आरम्भो भवति ।

"स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
निवेदयति चेद् राज्ञे व्यवहारपदं हि तत् ॥"

डॉ.सेनमहाभागेन 'हिन्दुजुरिसप्रूडेन्स' इतिग्रन्थे अस्मिन् विषये एतत् मतं प्रकाशितं यत् धर्मशास्त्रेषु राज्ञ उपरि आततायिनं दण्डयितुं नियन्त्रयितुं च यो भारः स्थापितः तस्मात् एतत् स्पष्टं भवति यत् धर्मशास्त्रकारैरपि विधानं राजाश्रितत्वेन मन्यते । यथा ऑस्तिनमहाभागेन । पार्थक्यं तु केवलमेतदेव यत् यत्र ऑस्तिनमहाभागः विधानस्य उत्पत्तिमपि अथवा सार्वभौमशक्त्या निर्धारयति तत्र धर्मशास्त्रकारः विधानस्य अर्थात् धर्मस्य उद्गम-स्थानत्वेन ईश्वरं मानयति । केवलं धर्मस्य पालन भारो राज्ञ उपरि संस्थापितः । अनेन प्रकारेण भारतीयपरंपरायां राजा कदापि विधानं वा धर्मं वा अतिक्रम्य गन्तुं न शक्नोति। किन्तु पाश्चात्यपरंपरायाः राज्ञः उपरि कश्चन प्रतिबन्धो नास्ति । अयं Law of Nature वा नैसर्गिकनियमःकथ्यते । अयं सर्वोपरि तिष्ठति । अस्य आधारेण फ्रांसस्य प्रसिद्धःदार्शनिकः समाज-तत्त्वचिन्तकश्च रुसोमहाभागः राज्यस्य शक्तेः आधारत्वेन Social contract वा सामाजिकानुबन्धं मानयति । राजा उल्लंघनेन प्रजानामाधिकारः आगच्छति । सोऽनेन तत्र राजप्रभुत्वस्य अवज्ञां करोति ।

प्राध्यापकजोलोविस्जमहाभागेन (Lectures on Jurisprudence) विधिशास्त्रोपरि भाषणम् इति नामके स्वग्रन्थे कथ्यते यत् विधानस्य

सैद्धान्तिकाधारसम्बन्धे यः इदानीमपि बहुशो विचार्यते, तस्य मूलं ग्रीसविचारधारायां प्राप्यते । ग्रीसदेशस्य विचारकाणां सकाशात् न केवलं प्राकृतिक नियमसिद्धान्तो निर्गतः, अपितु तस्य प्रतिलोमचिन्तनमपि, यत् आँस्तिनशब्देन राज्यप्रभुत्वस्य आज्ञा भवति, तत्रापि अस्माभिः समाजिकानुबन्धो बीजरूपेण लभ्यते ।

तथाच लिखितानामलिखितविधानानां साम्प्रतिकविरोधाभासोऽपि लभ्यते । यस्योपरि अरिस्टोटलमहाभागस्य स्वकीयव्यक्तिगतमान्यता आसीत् । यस्मात् अधिकः उत्कृष्टो विचारः अद्यावधि न लब्धः ।



## सप्तमोऽध्यायः
## रीतिः रुढिः आचारः, रिवाज

७.१ प्राचीने काले विधानस्य विधिवत् प्रादुर्भावात् पूर्वं समाजस्य परिचालनं प्रतिष्ठितप्रथामाधृत्य भवति स्म । समाजे यस्य आचारस्य प्रचलनं बहुप्राचीनकालात् भवति स्म, तस्मिन् समाजस्य अस्था स्थापिता आसीत् । सामान्यजनेन तस्याधारेण आचरणं प्रकाशितमासीत् । भविष्यस्य योजना प्रत्याशा च तदुपरि केन्द्रिते अस्ताम् । एवं प्रकारेण आचाराणां विधानगतस्थानमागतम् । येन समाजसम्मताचारस्य उल्लंघन कृतं स दण्डभाग् भवति स्म । अस्याः प्रथायाः उपरि धार्मिकं, नैतिकमार्थिकं च समस्तप्रकारकं कार्यजातं संपन्नम्, तदानीं विधानसभा नासीत् । राजभिरपि उच्छृंखलतायाः स्थाने प्रचलिताचाराणां कृते आदरः आगतः । फलेन समाजे नियमःमर्यादा च सुरक्षिता । न किञ्चित् दुष्प्रकारकं कर्म आसीत् । एवंरीत्या, प्राचीनसमाजे एकेन प्रकारेण आचारणामपि प्रभावः स्थितः । आचारा अपि विधानवत् स्थिताः । अस्मिन् स्थले एतदपि स्पष्टं वक्तुं शक्यते यत् अनेन मतेन सह सर्वेषां विधिविचारकाणां सहमति र्नासीत् । स्वयं सारहेनरीमेनेमहाभागेन भिन्नं मतमुपस्थाप्यते । तस्य

मतानुसारं समाजस्य प्राथम्यः प्राक् राज्ञआदेशः प्रबलः आसीत् । यः Themistes इति कथ्यते । सकृत् यदा राज्ञः आज्ञायाः पालनस्य परम्परा प्रारब्धा तदा समाजस्य आचाराणां पालनस्यापि प्रचलनं प्रारब्धम् ।

१०.२ प्राचीनसमाजस्य सरलतन्त्रे सम्भवतः सांप्रतिककालापेक्षया अवस्थासु अधिकं साम्यमासीत् । समानप्रकारकाणां वादानां श्रुखंलायां निर्णयो मिथ आसीत् । अत्र आचाराणां बीजं निहितमासीत् । एतत् निर्णयानां थेमिस्तस्य वा उपान्तकल्पना आसीत् । वर्तमानकालिकपरिवेशे अस्यां घटनायां कियती वा प्रबला प्रवृतिरस्माकं न भवतु किन्तु आचारस्य भावना न्यायधीशीयोद्घोषणातः पूर्ववर्तिनी भवितव्या या कल्पनाप्रसूता एवं च निर्णयरीतिंपोषयन्ती अथवा तस्याः उल्लंघनाय दण्डमपि प्रणयति, तथापि एतत् निश्चितं यत् ऐतिहासिकः क्रमोऽयमेव यः मेनेमहाभागेन उच्यते । परन्तु स्वयं सारहेनरीमेनेमहाभागेन द्वितीये ग्रन्थे इत्यत्रा Early Law and Customs आचाराणां पूर्ववर्ति अस्तित्वं स्वीकृतम् ।

१०.३ इंगलैण्डदेशस्य देशीयविधानं देशस्य नागरिकाणां कृते निर्धारितमाचरणमुपनिषद्धं, विधिवत् द्विधाविभज्यते । अलिखितविधानं लिखितविधानं च । अलिखितविधाने केवलं देशव्यापिनामाचाराणां सम्मेलनं नास्ति वरं प्रान्त-विशेषप्रचलिताः प्रधानाचाराः अपि सन्ति । एवं प्रकारेण एतत् विशिष्टं विधानमपि भवति यत् प्रधान-प्रधानन्यायालयेषु अधिकार-क्षेत्रेषु वा प्रचलितं वर्तते ।

१०.४ इंगलैण्डदेशस्य आचाराणां विषये ब्लैकस्टोन (Blackstone) महाभागेन इयमुक्तिः स्वग्रन्थे 'Commentaries on the law of England' (संस्करण २७२३ भा. १. पृ. ७२) प्रतिपादिता, यथा :-

["The municipal law of England, or the civil conduct prescribed for the inhabitants of this kingdom, may with sufficient propriety be divied into two kinds the Lexmon Scripta, the unwritten or common law; and the law Scripta the written or statute law. The lex non scripta, or unwritten law, includes not only general customs,

or the common law properly so called, but also the particular customs of certain parts of the kingdom; and lixewise those particular laws that are by custom observed only in certain courts and jurisdictions."]

१०.५ मध्ययुगे यद्यपि विधानस्य विशुद्धरूपेण प्रचारःप्रारब्धः भवति तथापि तस्य मात्रा परिमिता आसीत् एवं च आचाराणां विकाशो न स्थगितः एवं न अस्य प्रभावोऽवदमितः। एतदवश्यं जातं यत् यस्मिन् विषये राजशासनेन निश्चितो नियमः निर्धारितः तस्योपरि आचारस्य नियन्त्रणं ह्रासितम्। किन्तु समान्तवादस्य विकाशेन सह नूतनाचाराः विकशिताः पल्लविताश्च इति अस्वीकारो नैव क्रियते।

१०.६ सांप्रतिकयुगे आचाराणां विकासधारा शिथिला जाता; यतोहि विधानसभा अद्यत्वे समस्तेषु देशेषु विधिवत् कार्यंकरोति। अतएव एते आचाराः के येषां मान्यता इदानीमपि नितान्तं न ह्रासिता एतत् सम्यग्भावेन अवगमनमावश्यकम्।

१०.७ आचारो द्विविधः। एकस्तु अयमेव यः यस्मिन्कस्मिंश्चित् देश-विशेषे सर्वत्र प्रचलितो वर्तते एवं च केचन आचाराः इत्थं सन्ति, ये केषुचित् क्षेत्रविशेषेषु प्रचलिताः सन्ति। देशव्यापिन आचाराः सरलतया परिवर्तितपरिस्थितौ विधानस्य आसनं दृढतया अधिकुर्वन्ति। यथा इंगलैण्डदेशस्य "कमन ल" (Common Law)। अस्मिन् विषये अद्यापि कथ्यते यत् एतत् तत्रत्याचार सापेक्षविधानं भवति। यत् तत्रत्यन्यायाधीशेन स्वीयनिर्णये स्वीकृतं विधानत्वं च प्रापितंम्। यद्यपि अस्यां प्रक्रियायां तैः अनेके नूतनविचाराः पुरातनाचारैः सम्मिलिताः। पुनश्च तेऽपि रीतिसंज्ञां प्राप्ताः। प्राक्तनभारतेऽपि देशाचारस्य एतत् स्थानमासीत्। इस्लामीय देशेषु अपि एतादृशानामाचाराणा मत्युच्च स्थानमासीत्। भारतवर्षे यत्र औपचारिकविधानं प्रणीयते तत्रापि आचाराणां मान्यता प्रदत्ता। यथा वंगेषु प्रजास्वत्वविधान (Bengal Tenancy Act) मिति। यदा इयं व्यवस्था कृता तदा भूस्वामिनां स्वीकृतिं विना प्रजाःस्वीयभूमिं विक्रेतुं नापारयन्। तत्र इयमपि प्रथा स्वीकृता यत् यत्र मूलविक्रय-प्रथा प्रचलिता, तत्क्षेत्रे अस्य विधानस्य अपवादो भवेत्।

एवं प्रकारेण अगणिताः आचाराः सन्ति येषामाधारः केवलमात्रं तेषाम् अस्तित्वं न भवति ।

१०.८ परन्तु एतेभ्यो देशव्यापिभ्य आचारेभ्य ऋते अपरेऽपि अतिरिक्ताः केचिदाचाराः सन्ति ये केषुचित् क्षेत्र-विशेषेषु प्रचलिताः सन्ति । यथा पंजाव, द्राविड, उत्तरप्रदेश प्रभृतिषु प्रत्येकराज्येषु भारतवर्षे एवं स्थानीया आचाराः सन्ति। ये देशस्य अन्येषु भागेषु न सन्ति । किन्तु न्यायालयः तान् स्वीकरोति। विवादस्य उपस्थितौ समाधनमपि भवतिं । इंगलैण्डदेशेऽपि एतादृशाः स्थानीयाचाराः सन्ति । यथा कस्मिंश्चित् क्षेत्र-विशेषे इयं रीतिरस्ति यत् पितृमरणानन्तरं विद्यमानेन कनिष्ठपुत्रेण सर्वा अचला सम्पत्तिः अधिक्रियते, स्थानान्तरे ज्येष्ठपुत्रेण उत्तराधिकारः प्राप्यते । इत्थं बहवः स्थानीयाचाराः सन्ति । विधानं वां न्यायालयो वा तान् उल्लंघितुं न शक्नुयात् ।

१०.९ एवं प्रकारेण देशव्यापिभ्य आचारेभ्यः एवं स्थानीयाचारेभ्यश्च ऋते अतिरिक्त एकप्रकारक अधारो पूर्वं स्वीक्रियते । अयं conventional custom कथ्यते । यदि अयमाचारः प्रमाणेन सिद्धो भवेत्, तर्हि न्यायालयेनापि स्यीक्रियते । एतादृशानाचारानाधृत्य अद्यत्वे व्यापारिकविधानं निश्चीयते। इदानीमपि येन केनापि मार्गेण इदं विधानस्य रूपं क्रमशः गृह्णाति । यथा बिलआँव एकसर्चेज इत्यादि विक्रेयत्वेन (Negotible) प्रस्तूयते । पुनश्च विचारणीयमिदमेव यत् विधानं यत् स्वीकरोति तत् किम् ? किमु कस्यचन कथनमात्रेण कश्चन आचारः विधानेऽन्तर्भवति ? यदि एवं स्यात्तर्हि विधानस्य किमपि महत्वं न स्यात् । अतएव धर्माधिकारिभिः अस्मिन् विषये केचित् नियमाः स्थिरी कृताः । यथा - आचारो निर्दिष्टः स्यात् । पुनश्च प्रत्येकावस्थायां प्रणेतुं शक्यःस्यात् पुनश्च, प्राचीनः स्यात् । इत्थं प्राचीनः स्यात् यथा जीवितो मनुष्यः स्मर्तुं नैव शक्नुयात् । Certain, Invariable and Ancient एतैः त्रिभिः लक्षणैः संयुक्तः स्यात् । एतैः विना स निर्मलो न भवेत् । अधिक प्राचीनकालिकत्वस्य इयमेव आवश्यकता यत् नूतनाचाराणां मान्यताप्रदानेन विधानस्य अपलापो भवेत् । किन्तु जीवितमनुष्यस्य स्मृतेः परमित्थं स्यात् । यत् तस्य विरोधे उदाहरणान्तरं न दातुं शक्यते । इंगलैण्ड देशे प्राचीनतायाः

कालो द्वादशशताब्दीपर्यन्तमाकृष्य आनीतः ।

१०.१० इदानीं प्रश्न उत्तिष्ठति यत् स्थानीयाचारा स्वीकृताः स्युरिति । कीदृशः समयः एतदर्थं पूरणीयः । अस्य सारांशोऽयमेव यत् आचाराणां प्राचीनत्वं नाम आचाराः इत्थं प्राचीनाःस्युः येन तेषां प्रादुर्भावस्य निश्चितः समयःज्ञातः न स्यात् । यद स्मरणातीतप्राचीनता Immemorical antiquity इति नाम्ना अभिधीयते । इंगलैण्डदेशे अस्य समयः 1189 A.D. पर्यन्तं स्वीकृतः । परन्तु, व्यवहारतः एतादृशप्राचीनसमयस्य प्रमाणमुपलब्धं न भवति । अतएव इंगलैण्डदेशेऽपि अयमनिश्चितत्वेन परित्यक्तः । यदि कश्चित् जन उचितप्रमाणोपस्थापनेन साधयेत् यत् तस्मात् समयात् वर्तमानसमयपर्यन्तमयं विवादग्रस्त आचारः अनुकूलो नास्ति इति । तर्हि एतस्य आचारस्य प्रामाणिकतायाः खण्डनं स्यात् ।

१०.११ द्वितीयः समयः भवति आचाराण्यमनवरतं प्रचलनमभूत् येन तस्य विरोधे तस्मिन् क्षेत्रे, यत्र आचाराणाप्राधान्यं दृश्यते, कश्चन द्वितीय आचारो न प्रचलेत् । एतत् किमपि आवश्यकं यत् अयमाचारः सदैव कार्यान्वितो भवेदिति । एतत्तु यथेष्टं यत् यद्यत्र किमपि प्रकारकं व्यवधानं न जांतम् अथवा केनापि स्वीयाधिकारः न परित्यक्तः । यथा यदि कश्चन मत्स्यं धर्तुमधिकारं प्रकटयेत् एवं च यत्र मत्स्यधरणाय स्थानं स्यात् यथा पुस्करिणी, कूपः, नदी इत्यादीनि, तत्र मध्यभागः शुष्कंःजातः, तेन तस्य अधिकारस्य हननं नैव बोध्यते । किन्तु यदि कश्चन तत्र बाधामुपस्थापयेत् अथवा आचारस्य आधारेण अधिकारं प्रकटयेत् जनः तं त्यजति, तर्हि तस्य अधिकारस्य लोपः भवति, आचारस्य स्थापनं नैव भवितुमर्हति ।

१०.१२ तृतीयः समयो भवति अयं यत् अधिकारस्य उपभोगः एवं च निरन्तराव्याहताधिकाररूपेण क्रियते यत् necvi, necclam, necprecurio इति कथ्यते । एतदर्थं, यदि कश्चन जनः स्वामित्वपट्टमानीय वा मत्स्यानुद्धरेत् अथवा कश्चन द्वीतियप्रकारकोऽधिकारः तेन प्राप्तः । तर्हि तस्य गणना आचारस्थापनाय न कर्तुं शक्यते ।

१०.१३ पुनश्च आचारस्य निश्चितत्वमावश्यकम् । यदि तस्य निश्चितत्वं न

स्यात् तर्हि समाजस्य सर्वो जनः अथवा परिवारविशेषस्य सदस्योऽपि समयातिक्रमणानन्तरं समानरूपेण तदाधारेण नैव चलितुं शक्नुयात् । अस्मिन्विषये भिन्न-भिन्नव्यक्तीनां चित्ते भिन्नप्रकारकधारणाः उत्पद्येरन् । एवं च कोऽपि निश्चित आचारः स्थापितो नं भवितुमर्हति । पुनश्च, आचारस्य युक्तियुक्तता एवं च औचित्यमावश्यकम् । काचित् अनुचिता रीतिः नीतिविरुद्धा कियती वा पुरातनी भवतु । न्यायालयेन सा स्वीकृता न भवति । अयमेकः विवादास्पदो विषयः । अस्मात् कारणात् भिन्नप्रकारका निर्णयाः प्रत्येकदेशे न्यायलयेषु दृश्यन्ते । स्वयम् इंगलैण्डदेशे यत्र एकस्यां दिशि अयं निर्णयो भवति यत् यदि कश्चित् पुरोहितः विवाहस्य शुल्करूपेण २३शिर्लिंगधनं ग्रहीतुमधिकारबुद्ध्या कथयति तर्हि तत्र एतत् अनुचितम् । यतोहि यस्मात् कालात् आरभ्य इदं शुल्कमायाचितं, कस्मिंश्चित् बृहति कर्माणि तस्य विनियोगौ नैवभवति स्म । यतोहि द्रव्यस्य मूल्यं तदा बहुअधिकमासीत् (Bryant v Foot) । किन्तु पुनः अस्य विपरीतोऽपि कश्चित् निर्णयो यत्र सत्यं तु एतदेव यत् उचितानुचितौ द्वौ शब्दौ इत्थंस्तः ययोः विषये न्यायालयस्य स्वकीयो विचारः वर्तते, एवं च अन्ततो गत्वा न्यायाधीशस्य आत्मविवेकोपरि आत्मनिर्भरता विद्यते । विशेषतः यदैतत् न ज्ञातं यत् उचितस्य मापदण्डो निर्णयदिवसे प्रचलितो मापदण्ड एव, अथवा तस्य दिवसस्य यदा आचारस्य प्रारम्भः सम्यगवगतः ।

१०.१४ षष्ठसमयत्वेन एतद् वर्तते यत् यदि कश्चन आचारः इंगलैण्डदेशस्य साधारणन्यायसिद्धान्तं संवदति अथवा यः कस्यचन देशस्य विधानसभया स्वीकृतविधानस्य विरोधी भवति, तस्यापि मान्यता न स्यात् । अनेन प्रकारेण संप्रति प्रचलितहिन्दुविधिगताधिनियमो न प्रचलितानां केषाञ्चिदाचाराणमुन्मूलनं करोति, अस्मिन् विषये एकाव्याख्या भवितुमर्हति, यत् न्यायालयेन स्वीकृतत्वेऽपि आचाराणां विधानमर्यादा आगच्छति अथवा न्यायालयप्रचलिताचारस्वीकृत्यैव मान्यतामात्रं दीयेत । एतत्तु सत्यं यत् केनापि धर्माधिकारिणा एतेषामाचाराणां विषये नैव कथ्यते यत् तस्य मान्यता प्राप्त्यनन्तरमाचारोविधानस्य बलं प्राप्नोति । तस्य कथनं सततमित्यं तिष्ठति

यत् ते आचाराणां स्थापनस्य उचितप्रमाणानि परीक्ष्य तान् स्वीकुर्वन्ति अथवा न स्वीकुर्वन्ति । ते स्वयं तस्य बलं न कल्पयन्ति । प्रसिद्धो विधिविमर्शको जेथ्रीब्राउन कथयति यत् एतत् कथनं तस्य शिष्टता-मात्रम् । तस्य कार्यकथनयोर्मध्ये कश्चन समन्वयो नास्ति । सत्यं त्वेतदेव यत् तस्य मान्यताया अनन्तरम् आचाराः विधानश्रेणिमागत्य तिष्ठन्ति । परन्तु, अस्य विरुद्धमतानुयायिभिरपि सबलं प्रमाणं दीयते । तेषामयमेव आशयो यत् धर्माधिकरणं प्रति गमनात्पूर्वमगणिताः जना आचारस्य आधारोपरि स्वीयमाचरणमुपस्थापयन्ति । एवं प्रकारेण विधानेन यत् कार्यं भवति, तत् आचारेणापि प्रथमतः क्रियत एव । यदा काचित् विशेषागच्छेत् एते आचाराः न्यायालयस्य समक्षं कस्मिंश्चिद् विवादे उपस्थाप्येरन् ।

आचारेण साकं सम्मिलति यद् द्वितीयं वस्तु तद्भवति Usage, यत् परिपाटी लोकव्यवहार उच्यते । परिपाट्याः प्राधान्यमुपरि तिष्ठति । एवं यस्य संबन्धः व्यापारविशेषे प्राप्यते । कयोश्चन द्वयोः पक्षयोः अनुबन्धेन सह इयं संबध्यते । परन्तु तासां मान्यतायाः कश्चित् निर्धारितो नियमो वर्तते । अयं यथेष्टरूपेण व्यापारविशेषः जनैर्ज्ञायते, अयं Notoriety इति कथ्यते । एतस्य कारणमेतदेव यत् यदि अयं व्यापारविशेषोऽधिकांशजनैरुत्तमरूपेण ज्ञातो न स्यात् तर्हि केनचित् अनुबन्धेन सह अस्य संयोगो न्यायपूर्णो न भवति । पुनश्च अयं विशेषप्रचलितविधानस्य विरोधी न भवेत् । अन्यथा अयं "Usage cannot alter the general law of the land whether statutory or common law" पुनश्च आचारवत् परिपाट्यपि उचिता युक्तिसंगता च भवितव्या । सा स्थानीया सर्वदेशीया अन्ताराष्ट्रिया वा भवितुमर्हति । आचाराः सामान्यतः स्थानीयाः भवन्ति अन्यथा सामान्यविधित्वेन अथवा साधारण न्यायत्वेन बोध्येत । एवं न स्याच्चेत् पुनश्च तस्मात् विच्छिन्ना भवति । एतादृशो विचारः न्यायाधीशेन टिण्डलमहाभागेन बेस्टनमहाभागेन च प्रकटितः ।

१०.१५ संप्रति आसां परिपाटीनां संख्या पूर्वकालापेक्षया अत्यन्तं स्वल्पा । इदानीं विधान-सभाभिः एतादृश्यः बहुमान्यपरिपाट्यः विधानरूपेण स्वीकृताः । यथा इंगलैण्डदेशस्य विनिमयपत्राधिनियमः, प्रदान-विक्रयाधिनियमः तथा

सामुद्रिकसुरक्षाऽधिनियमश्च । आचाराणां मध्ये अन्योऽपि एकः नियमो वर्तते यः कालार्जन (Prescription) नाम्ना व्यपदिश्यते । अस्य सम्बन्धः जनस्य स्वाधिकारेण भवति । यथाः यज्ञदत्तः देवदत्तस्य क्षेत्रेऽथवा क्षेत्रप्राचीरे चिरकालपर्यन्तं चलति एवं च देवदत्तः तत्र न आपत्तिमुपस्थापयति ।

१०.१६ तर्हि बहुदिवसानन्तरं यज्ञदत्तस्य भूमौ देवदत्तस्य चलनाधिकार आगमिष्यति । इदानीम इंगलैण्डदेशे भारते च अस्य अधिकारस्य अवधिः २०वर्षपर्यन्तं निरन्तरभोगेन सिद्ध्यति । अनेन प्रकारेण यदि द्वादशवर्षपर्यन्तं यज्ञदत्तो देवदत्तस्य भूमिं स्वस्यभोगे रक्षति, तत्र च देवदत्तः, स्वाधिकारप्रयोगं यज्ञदत्तस्य भोगहानाय न कुर्यात् । तर्हि यज्ञदत्तेन, तद्भूमौ कालार्जितागमसौकर्यं प्राप्येत । एतत् आचारात् पृथक् वस्तु । यतोऽहि आचारस्य सम्बन्धः समाजेन सह विद्यते परन्तु कालार्जनस्य सम्बन्धो जनेन सह तिष्ठेत् । अत्र एषां भावानामावश्यकता नास्ति - येषामाचराणां मान्यता वर्तते ।

१०.१७ धर्मशास्त्रेषु अतिप्राचीनकालादारभ्य आचाराणां विधिव्यवस्थानाम-त्युच्चस्थानं विद्यते । तस्य उपयुक्तः शब्दो भवति सदाचारः अथवा शिष्टाचारः । अर्थात् सत्पुरुषाणां विशेषपरिस्थितै आचरणं यत्र स्मृतिवाक्यानामभावे, समाजे मान्यं भवति । प्रथमतः विशिष्टपुरुषाणामाचरणस्य इयं मान्यता आगता किन्तु क्रमशः अस्मिन् स्थानविशेषे समाजस्य श्रेणीविशेषे प्रचलितसमस्ताचारणां नीतीनां च समावेशो जातः । अनेन प्रकारेण आर्यावर्ते हिमाचलं विन्ध्याचलं च अन्तरा विद्यमानस्य भूखण्डस्य आचारो विचारश्च समग्रभारतवर्षस्य कृते प्रचलितो जातः । दक्षिणेन हिमवतः उत्तरेण विन्ध्यस्य ये धर्मीया आचाराः ते सर्वे प्रत्येतव्या न त्वन्ये प्रतिलोमकल्पधर्माः ।

१०.१८ केवलं रीति-विरुद्धाचाराणां सम्बन्धे कश्चन मतभेदो अवश्यं वर्तते न्यायालयेन अयं स्वीक्रियेत अथवा न स्वीक्रियते । यथा गणिकानां कन्यायाःदत्तकसन्तानरूपेण ग्रहणं, यतोहि अयं सन्तानोऽपि तद्वत् कुमार्गानुसरणं कुर्यात्, अत्र इयमाशंका तिष्ठति तथाच आचाराणामस्यामवस्था यामपि मान्यता नैव देया यथा धनापहरणसदृशानां न्यायविरुद्धकार्याणामनुमोदनं भवति इति । भाष्यकारैः विद्वद्भिः एतादृशम् उच्चस्थानं दत्तं यत् तेषां सम्मता

एतेआचाराःकस्यचन विस्मृतस्मृतिवाक्यस्य उपरि आधारिताः येषां मूलस्य परिप्रकाशोऽत्यन्तं कठिनतरं कर्म । अतएव स्मृतीनामपेक्षया एतेषामधिक आदर आवश्यकः । केचन विद्वासः नूतनप्राचीनाचारणां तुलनया स्मृतिभ्य उच्चस्थानं प्रयच्छन्ति । परन्तु प्रिविकाउन्सिलसंस्थया स्मृतानामपेक्षया आचाराणां कृतेऽधिकं प्राधान्यं प्रदत्तम्, यत्र जीमूतवाहनस्य एतन्मतमाधाररूपेण स्वीक्रियते - तर्हि वचनशतेनापि वस्तुनोऽन्यथाकरणाशक्तेः । युरोपीयन्यायाधीशानां कर्तव्यं हिन्दु-विधिप्रचलनाय भवति । ते कञ्चन विशेषनियम मन्विष्य धर्मशास्त्र-स्म्मतो न वा प्राचीनाचार्यैः अयं स्वीकृतो न वा इति न निरीक्षन्ते । वरमेत् दृश्यते यत् यस्य क्षेत्रस्य वादो वर्तते । तत्क्षेत्रे स स्वीकृतो न वा एवं च समाजे स नीतिरूपेण प्रचलितः न वा यतोहि हिन्दुविधानानुसारं प्रचलिताचाराः लिखितवचनापेक्षया अधिकतया प्रामाणिका भवन्ति । एते नियमाः एतदर्थं प्रतिपाद्यन्ते यत् शास्त्रेषु अपि द्विप्रकारकं वाक्यं विद्यते - एकं विधिरूपेण द्वितीयं निषेधरूपेण प्रथमप्रकारकं विधानस्य अनिवार्यम् अगं भवति । एवं च द्वितीयं केवलं परिशुद्धतानिमित्तं प्रशंसितं स्यात् । आचाराणां काचित् वैधानिकी परिभाषा विद्यते । आचारः एको नियमो भवति । यस्य कस्मिंश्चित् विशेषपरिवारे स्थाने वा दीर्घकालीनव्यवहारात् विधानात् स्वीकृतिर्भवति । एतादृशो नियमः प्राचीनः, निश्चितः एवं च युक्तिसंगतः भवेत् । तेन च सह सामान्यविधानस्य प्रतिकूलत्वांत् तस्य परीक्षा आवश्यकी ।

१०.१९ आचारः त्रिविधो भवति देशाचारः (Local custom), कुलाचारः (Family custom), वर्गाचारश्च (Class custom) । हिन्दुविधौ उत्तराधिकारसंबन्धे विशेषपरिवारे ज्येष्ठपुत्राय सम्पत्तिप्रदानम् अन्येभ्यः पुत्रेभ्यः भरणपोषणव्यवस्थामात्रं क्रियते । अयं कुलाचारः भवति । पुनश्च गुर्जर द्रविड-पंजाव-मिथिला-वंगकलिगं प्रभृतिषु राज्येषु प्रचलिताः केचन विशेषाचाराःसन्ति । एतेऽपि स्मृति-सम्मत्यभावेऽपि मान्यता प्रदत्ता । एवं प्रकारेण, व्यापारिणामपि प्रचलिताः केचिंत् विशेषवर्गीयनियमाः सन्ति । तेऽपि आचाररूपेण स्वीकृताः । परन्तु केषाञ्चन आचाराणां न्यायालयैः विधिवत् स्वीकृतेः पूर्वमेतदावश्यकं यत् वादस्य प्रारम्भपर्यन्तमयमाचारः प्रचलितः तिष्ठेत्, तदर्थं निश्चितं संशयमुक्तं

प्रमाणं लब्धव्यम् । यतोहि यदि प्रमाणं संशयमुक्तं न भवति तर्हि लिखितशास्त्रीय व्यवस्थानां तुलनया एतादृशी सन्दिग्धा परम्परा विधानरूपेण मान्या न स्यात् । पुनश्च अस्याचारस्य प्रारम्भः कस्यापि जीवितस्य जनस्य निमित्तं स्मरणातीतः (Immemorial) स्यात् । यदि कश्चन नियमोऽर्वाचीनो न भवति, एवंच कश्चन जीवितः पुरुषः यो वृद्धो जातः अथवा स कथितुं न शक्नुयात् यत् तस्य स्मृतिकाले अस्य प्रारम्भोजातः, तर्हि स विधानरूपेण न मन्यते । एतत् एवं कथितं यत् आचाराणां सम्बन्धे अयं नियमः इंगलैण्डदेशेऽपि मन्यते, किन्तु तत्र एतस्य प्रमाणीकरणं कठिनतरम् । कारणं त्वेतत् यत् तत्र स्मरणातीतकालात् काचित् मान्या परिभाषा नास्ति । अस्यां स्थितौ कः प्राचीनः को न इति निर्णेतुं कोऽपि मापदण्डो नास्ति ।

१०.२० धर्मशास्त्रे अस्य एका तर्कसम्मता सीमा निर्धारिता । सा एकशतवर्षपर्यन्ता । यतोहि मनुष्यस्य अधिकतमम् आयुः एकशतवर्षात्मकं मन्यते । एतत् त्रिपुरुषान् स्पृशति । परन्तु आचाराःप्राचीन कालात् आगच्छति । स युक्त्या तर्केण वा निर्मीयते । आचाराः भिन्न-भिन्न क्षेत्रेषु संयुक्ताः तिष्ठन्ति । तेष्वपि स एकः द्वितीयस्य विरुद्धो भवति । कस्यामपि अवस्थायां न्यायालयार्थं ते मान्या भवन्ति । किन्तु आचाराः लुप्ताः भवितुमर्हन्ति यदि ते वादस्य उपस्थितिपर्यन्तं जीविताः न तिष्ठन्ति तर्हि कदा भूतकाले तस्य अस्तित्वमासीत्, केवलमेतेन स वादे प्रस्तोतुं न शक्यते । परन्तु एवमंपि नियमो वर्तते यत् कदाचित् केवलम् आसामवस्थानां लोपात् कारणम् कश्चन विशेषाचारः प्रचलितः भवति । स आचारः तिरोहितो न भवति । यदि कस्मिंश्चित् विवादे वेतनरूपेण काचित् भूमिः प्रदत्ता या अविभाज्यत्वेन जायते । वेतनेन सह विशेषः सेवाभारोऽपि संयुक्तः, तथापि यदि असौ सेवाविषयांशः समाप्तः भवति, तत्र अविभाज्यताचारः अनया सम्पतित्त्या सह संयुक्तः तिष्ठति । परन्तु एतदपि दृश्यते यत् यदि काचित् संपत्तिः केनचित् विशेषसमयेन सह दीयते एतेन च काचित् विशेषरीतिः स्थाप्यते । तर्हि तस्याः संपत्तेः परिवर्तनेन सह तत्रत्याचारोऽपि समाप्तो भवति । अस्मिन् विषये भिन्न-भिन्नवादेषु धर्माधिकरणेन सूक्ष्मं पार्थक्यं निष्कास्य निर्णयःघोष्यते ।

१०.२१ विधाने च आचारं व्यवहारं (Custom and usages) च अन्तरा भेदः क्रियते । आचाराः स्मरणातीताः भवितव्याः । परन्तु लोकव्यवहारस्थले अयं नियमो न प्रणीयते । प्रिवि काउन्सिलसभयाऽत्र अयं विचारः कृतो यत् लोकव्यवहारं प्रमाणयितुं नैतदावश्यकम् । अयम् आवश्यकः अतीव प्राचीनः स्मरणातीतः निश्चितोऽपरिहार्यश्च न स्यात् । यदि व्यापारिकघटनासु काचित् स्वीकृता परिपाटी स्यात्, तदा सा लोकव्यवहारवत् स्वीकृता भवेत् । उभयोःपक्षयो सहमति प्रदानात् पूर्वं कश्चन विशेषसमयः आवश्यकः येन लोकव्यवहारः स्थापितो भवेत् । अतएव एतस्य समयपत्रस्य अर्थं स्वीकृत्य कर्मसंपृक्तिः स्यात् । कृषिभूमेः विषयेऽपि लोकव्यवहारोपरि आचरणं क्रियते यद्यपि अयमाचारः कठिनताया उपरि न तिष्ठेत् ।

१०.२२ यावत्पर्यन्तम् आचाराणां प्रमाणीकरणाय साक्ष्यस्य आवश्यकता वर्तते तत्र हिन्दुविधानं किमपि विशेषविधानं न भवति । एतदर्थं, प्रमाणप्रस्तुतये नियमः एतादृशोऽपि भवति, यदि लिखितप्रमाणं तस्मिन् विषये प्राचीनकाले प्राप्यते । तर्हि तत् उपस्थापयितव्यम् । एवं न स्यात् चेत् मनुष्यप्रमाणं देयम् । यो मनुष्यो वयोवृद्धः, अनुभवी एवं च बुद्धिमान् भवति । आचारलोकव्यवहारयोः विषये न्यायमूर्तिपार्करमहाभागैरुच्यते यत् स्वयं अयं निर्णयेन प्रकाश्येत ।

आचारः एवंप्रकारकः स्यात् यत् एकस्य प्रशिक्षितस्य विधिज्ञस्य सम्मतेः अयमांधारभूत सिद्धान्तस्य अनुकूलः स्यात् । योऽसामान्यनियमं प्रवाहं वा त्यक्त्वा, अस्माकं विधानयोजनां संवदेत् ।



## अष्टमोऽध्यायः

# विधानीकरणं वा विधि-प्रकल्पनम्

८.१ विधानानां निर्माणस्य इदमेकमित्थं स्त्रोतः यस्य प्राचीनकाले किमपि अस्तित्वं नैवासीत् यतोहि तस्मिन् समये विधानं रुढौ आचारे वा निबद्धमासीत् ।

रोमस्य विधानव्यवस्थायां विधानस्य विभाजनमासीत् लिखितविधानम् (Jusscriptul) अलिखितविधानं (Jus-nonscriptul) च लिखितविधानं प्रथमश्रेण्याम् आगतम् एवं च रीतिपरकविधानं द्वितीयश्रेण्याम्। इंगलैण्डदेशस्य विधानवेत्रा एवं च भाष्यकारब्लैकस्तोनमहाभागेन (सप्तदशशताब्दी) स्वयं ग्रन्थे Commentaries विधानस्य एतादृशं विभाजनं कृतम्।

८.२ परन्तु लिखितविधानाय मान्यताप्रदानर्थम् एतत् नावश्यकं यत् एतत् विधानं विधानसभायां स्वीकृतं स्यात्। यदि एका व्यक्तिः राजशासनं स्वहस्ते रक्षति सोऽपि किञ्चित् लिखितविधानं प्रचारयेत् यदाधृत्य विधिवत् कार्यं भवेत्। अपिच न्यायालये श्च एतदुपरि स्वीयमाचरणं प्रकाशयेत् तस्य आधारेण वादानामपि निर्णयो भवति। एतदपि विधि-प्रकल्पने निर्मितविधानत्वेन परिचीयते। परन्तु यदि कश्चिद् विधानं लिखितं न भवति ततः तत् संसदीयविधानमपि न भवति। प्रसिद्ध सम्मतविधानं भवतु न भवतु वा, तर्हि तत् आचारप्राप्तविधानम् कष्टम् (Custom) अथवा प्रथितविधानमिति (Convention) कथितं भवति।

८.३ विधाननिर्माणस्य सर्वोपरि अधिकारः अनया संस्थया अथवा व्यक्त्या प्राप्यते या प्रभुत्व संपन्नक्षमतायाः अधिकारिणी। सा संसद् भवतु, अन्यत् वा किञ्चित्, यथा इंगलैण्डदेशे 'पार्लियामेण्ट' संयुक्तराष्ट्रआमेरिकादेशे कंग्रेस एवं च भारतेऽपि संसद इति, अधिनायकवादिनि देशे अधिनायकेन अयमधिकारः प्राप्तः, नरेश-प्रधानराज्ये राजा। इंगलैण्डदेशस्य पार्लियामेण्टेन तु एतावान् अधिकारः प्राप्त येन तया न केवलं सर्वोपरि विधानस्य निर्माणं कर्तुं शक्यते, यत् पृथिव्याः केनापि द्वितीयाधिकारिणा निरस्तं कर्तुं न शक्यते वरं पार्लियामेण्ट यस्मिन्विषये वा गच्छति तस्मिन् विषये विधानं प्रणीय शसितुं शक्नोति। एतत् कथ्यते यत् एतेन भूयान् अधिकारः प्राप्तःयत् तत्र तेन पुरुषं स्त्रीत्वेन स्त्रीयं च पुरुषत्वेन निर्मातुं समस्तप्रकारकाधिकारेण सह सन्निविष्टमास्ते। यदि काचित् परिसीमा तस्य अधिकारोपरि वर्तते, तर्हि काऽपि पार्लियामेण्ट एतद् विधानं पारितं नैव कर्तुं शक्नोति एवं च पार्लियामेण्टप्रणीतं विधानं निरुद्धं कर्तुं नैव अधिकारं प्राप्नुयात्। किं बहुना, भारतीयसंसदः अथवा आमेरिका देशस्य

कंगरेसस्य अयमधिकारो नास्ति । यतोहि समस्तसंघीयशासने अथवा यत्र लिखितं संविधानं वर्तते तत्र संसदः अधिकारो विशिष्टरूपेण परिसीमितो भवति, एवं च शासनस्य भिन्न-भिन्नानाम् अंगानां सुनिश्चितोऽधिकार एवं च तस्य सीमा वर्तते ।

८.४ विधि-प्रकल्पनस्य द्वितीयः सम्मतो माध्यमो भवति तदधीनं संस्थानम् । इंगलैण्डदेशे एतादृशं संस्थानमासीत् उपनिवेशानां धारासभाः यासां सीमितोऽधिकार आसीत् । ब्रिटेनपार्लियामेण्ट उपनिवेश-स्थितधारासभागत विधानानि निराकर्तुं शक्नुयात् । पुनश्च यथा अन्यत्र दृश्यते यत्, राज्यस्य कार्याङ्गैरपि आसामधिकारःप्राप्तव्यः । यत् विधानं कस्यचित् सिद्धान्तस्य निर्द्धारण-मात्रं कृत्वा तस्य विशेषावस्थायां व्यावहारिकरूपेण प्रवर्तनाधिकारः तेभ्यः समर्पयेत् । अस्या अवस्थायाः तस्य विकल्पः विधानस्य रूपं गृहणीयात् । पुनश्च नगरपालिकायै स्थानीयसंस्थायै अपि अयं अधिकारः दीयते निश्चितसीमाभ्यन्तरे ताः स्वनियमान् प्रणयेयुः । तत् उपविधानं 'वाई ल' इति कथ्यते । नगरपालिका वा परिषद् तेन विधानेन, कार्यं संचालयेत् । एवंप्रकारेण प्रतिष्ठानाय, विश्वविद्यालयाय संस्थायै पंजीबद्धसमाजेभ्यश्च एवंप्रकारकोऽधिकारःप्रदत्तः । तैः स्वकार्यसंचालनाय स्वनियमान् उपनियमान् वा प्रणयेयुः । तेषां धर्माधिकरणानि तदनुसारं कार्यान्वयनं कुर्युः । यथा राज्यस्वीकृतविधानानि संसदीयविधानानि पौरविधानानि अथवा प्रकारान्तरेण सार्वजनिकसंस्थानैः स्वीकृतिप्राप्तविधानानि ।

८.५ विधानीकृतविधानस्य परिणियमस्य प्रचलनं तदा अभूत् यदा राज्ये धार्मिकभावात् राज्य-संचालनस्य प्रजापालनस्य वा विधिःपृथक् कृतः । प्राचीनविधानस्य संहिताकाराः अस्मात् कारणात् ईश्वरमवतारत्वेन देवतात्वेन वा अवगच्छन्ति स्म । प्राचीनं विधानं यूस (Jus) वा न्यायसिद्धान्त आसीत् । लेक्स (Lex) वा राजाज्ञा न आसीत् । परन्तु, यदा राजशासनरूपेण विधानं प्रकाशितं जातं, तदा सर्वप्रथमतया तस्य तुलना निर्णय-पद्धत्या संकलितविधानैः सह जाता यद्यपि रीतिभिः आचारैर्वा सह अस्य तुलना एवं च गुणदोषयोः समीक्षा भवितुमर्हति ।

८.६ विधानीकृतसिद्धान्तस्य प्रथमा विशेषता इयं यत् सा स्पष्टा भवति परतु रीतिः कदापि स्पष्टा न भवति । समस्तमौचित्यं रीतिर्न हि विभर्ति । प्रामाणिकनिर्णयोऽपि विशेषतः वादस्य परिधिमावृत्य तिष्ठति । अमुं विषयं विधिशास्त्री साल्मण्डमहाभागः स्वयं ग्रन्थे प्रतिपादयति । यत् वादीय विधानं स्वनितो बहिरगतसुवर्णसमं भवति । यत्र यदि बहुमुल्यधातोः कश्चित् अंशो वर्तते तदा राज्यविहितपरिणियमः राज्यस्य मुद्रासमः यस्य तत्कालिको व्यवहारो भवितुमर्हति ।

अनेन प्रकारेण विधान-सभा कैश्चित् निर्णितशब्दैः संक्षिप्तरूपेण स्वनीतिनिर्देशं करोति । यत् स्पष्टतया विधानमिति ज्ञातुं शक्यते । एवं च अस्मात् कारणात् इदानीं सर्वेषु देशेषु इत्थं च इंगलैण्ड देशेऽपि यत्र विधानीकृतौपचारिकविधानविरुद्धानां परम्परागतभावनानां प्राधान्यमधिकं, तत्रापि औपचारिकविधानेभ्यः एता भावनाः अधिकं स्पष्टीक्रियते । हिन्दुम् इसलामीयामन्तराऽपि प्राचीन विधानानां स्थाने व्यवस्थापिकासभाद्वारा स्वीकृतानां विधानानां प्रचलनं क्रमशो भवति ।

८.७ परन्तु अस्य अर्थो न भवति यत् एतादृशं विधानं स्पष्टतायाः सरलतयाः संशयात्मकतायाश्च दोषात् मुक्तं वर्तते, यतोहि तस्याःभाषाया, ज्ञानतः सामान्यरूपेण तस्य, सम्यगर्थो न प्रकाश्यते । सत्यं त्वेतदेव यत् स्पष्टविधानानां संख्या भूयसी, तथाच कस्मिन्नपि अधिनियमे अस्पष्टस्थलानि बहुशो विद्यन्ते । तत्र धर्माधिकरणार्थं सत्ये अर्थे व्यवस्थापिकासभायाः आशयोऽवगमनाय कठिनो भवति । न्यायकर्तुः कृते एतत् अत्यन्तमुत्थानपतनात्मकसंकटं भवति । अस्यामवस्थायां प्रामाणिकनिर्णायकवचनं यत् पूर्णविवेचनानन्तरं दीयते तत् अधिकं स्पष्टमेवंच विवादप्रकाशकं च भवति । अधिवक्तां तत् धर्माधिकरणस्य समक्षं स्वयमुपस्थाप्य न्याय-कार्ये संपूर्णसहयोगं करोति ।

८.८ परन्तु तदाऽपि परिणियमस्य इयं विशेषता भवति यत् सोऽनागतविधातृवत् भवति । अस्य विपरीतनिर्णयोऽपि कस्मिंश्चित् विशेषवादे उपस्थिते एव दीयते । सम्भवत इतः पूर्वमनेके आसन् येषां विवादोऽसम्यगूरूपेण निर्णीतो जातः । विधानं पश्चाद्दर्शि पूर्वप्रभावि (Retrospective) वा

भवितुमर्हति । परन्तु प्रामाणिकनिर्णयः भविष्यन्निमित्तं वर्तते । यतोहि विवादो ऽन्यथा समाप्तो भवति । तत्र Res-judicata वा पूर्वन्यायस्य सिद्धान्तः प्रवर्तते ।



"Case law is gold in the nine-a few grains of the precious metal to the ton of useless matter while statute law is coin of the realm ready for immediate use."

## नवमोऽध्यायः

## आचारस्य आवश्यकता

विधिज्ञैः काचित् सूचना दीयते यत् वैधनिकस्वीकृत्यै आचारस्य कानिचन निर्दिष्टानि लक्षणानि आवश्यकानि । ब्लाकष्टोनमहाभागेन अस्मिन् विषये अधोलिखितप्रकारेण उच्यते । सः कक्‌महाभागमनुसरति । आलेनमहाभागः एवं च अन्ये केचन प्रसिद्धाःलेखकाः विषयममुमनुसरन्ति ।

**१. प्राचीनता –**

एका प्रथा सर्वप्राचीनताहेतोः जनसाधारणद्वारा ग्रहणीयता भवति । आंलोविधौ अयं नियमो विद्यते । एकस्य निर्दिष्टस्य कालस्य पूर्ववर्तिकालमभिलक्ष्य वैधानिकस्मृतिः तिष्ठति । रिचार्डि महाभागस्य शासनात् पूर्वकाले नाम ११८९ खीष्टसंवत्सरात् प्राक् प्रथा प्रचलिता आसीत् । तस्यैव ग्रहणीयता भवति । विधिकल्पनाया इदमेव ज्ञायते यत् मनुष्यस्य स्मृतिः ८०० संवत्सरपर्यन्तं याति । परन्तु या प्रथा पुरातनी एवं च यस्याः आरंभकालो न ज्ञायते तर्हि सा ११८९ खीपूर्वं प्रचलितेति ज्ञायते । ततः परं यदि प्रथा प्रारब्धा सा पूर्ववत् न भवति ।

प्राचीनहिन्दुविधौ आधारस्य विधिरूपेण स्वीकृत्यै स्मरणातीतप्राचीनता नितरामावश्यकी । मनुना उक्तं यत् – स्मरणातीताचारः सर्वातिशायी विधिरित्युच्यते । सप्रंति भारतवर्षे यो विधिर्वर्तते तत्र आचारः अतीव पुरातनः । परन्तु इंलण्ड वत् अत्र प्राचीनतायाः प्रमाणीकरणार्थं समयस्य काचित् निर्दिष्टपूर्वसीमा नास्ति ।

**२. निरन्तरता -**

द्वितीया आवश्यकता आचारस्य भवति निरन्तरता । इंगलैण्डदेशे ११८९ ख्री. अभ्यन्तरे निरन्तरतया आगता स्वीकृता भवति । यदि दिर्धदिनमभिव्याप्य कश्चन आचारः विघ्नितो भवति तर्हि तस्य विरोधे मतम् आगच्छति । यद्वा भवतु । ब्लाकष्टोनमहोदयेन प्राप्तपतिबन्धाधिकारं प्राप्तप्रतिबन्धभोगं चान्तरा भेदः प्रकाशितः कालः यावान् स्वल्पो भवतु नाम। इयमधिकारस्य निरन्तरताहानिरेव । एतया आधारः समाप्तो भवति । एतेनेदमेव अवगम्यते यत् यदि भोगः केनचित् कालेन प्रतिबन्धं प्राप्नोति तथापि आचारस्य उपभागो न परित्यज्यते । आचारः निरन्तरतया तिष्ठत्येव ।

**३. शान्तिपूर्णोपभोगः -**

आचारः सर्वथा शान्तिपूर्णतया उपभुज्यते । यदि एषु आचारः कस्मिंश्चित् धर्माधिकरणे किंचित्कालमभिव्याप्य विघ्नितो भवति तर्हि सर्वेषां सहमत्या अस्य स्वोकार्यता तिष्ठेत् ।

**४. अनिवार्यबलम् -**

आचारस्य अनिवार्यबलमावश्यकम् । एष साधारणजनमतोपरि प्रतिष्ठितःस्यात् । एवं च अधिकारबुद्ध्या उपभुज्यते । अयं चेत् स्तेयबुद्ध्या तिष्ठेत् तर्हि तदा एष स्वीकार्याचारो न भवति ।

**५. निर्दिष्टता -**

एक आचारःसर्वदा निर्दिष्टःस्यात् । यदि एष आचारः निरर्थकः अनिर्दिष्टोये वा स्यात् तर्हि स ग्राह्यो न भवति । आचारः सर्वदा प्रमाणस्य नियमो भवति । नान्यत् किंचन । धर्माधिकरणं सर्वथा परिष्कृतप्रमाणेन सन्तुष्टं भवेत् । आचारः सर्वथा सत्यघटनादृष्टया तिष्ठेत्, अथवा वैधानिकाभिसन्धिना तिष्ठेत् ।

**६. औचित्यम् -**

आचारः अन्यस्य प्रतिष्ठितस्य आचारस्य विरोधे न गच्छेत् । आचाराणां मध्ये औचित्यं तिष्ठेत् । एतेन इदमेव अवगम्यते यत् एकआचारः अन्यस्य आचारस्य विपरीतत्वेन नैव उपस्थाप्येत ।

**७. युक्तियुक्तता -**

आचारः सर्वथा युक्तियुक्तः स्यात् । अयमत्यन्तं कष्टकरव्यांपारः यमाश्रित्य आचारो व्रजेत् । कस्यचन आचारस्य स्वीकृत्यै इयं धर्माधिकाणाय स्वातन्त्र्यं प्रददाति । परन्तु एतदर्थं किञ्चित् मानकं प्रतिष्ठितं स्यात् यदाश्रित्य धर्माधिकरणमग्रे सरेत् । सामाजिकपरिवर्तनस्य गत्या युक्तियुक्तता नैव विचार्यते । आचारस्य युक्तियुक्ततापरीक्षायै समयः तस्य प्रारंभसमयश्च इति ज्ञायते । प्रो.आलेनमहाभागेन उक्तं यत् आचारस्य युक्तियुक्तताविषयकं नियममङ्गीकृत्य आचारो ग्रहणयोग्योः न भवति । यद्ययं युक्तियुक्तः भवति किन्तु अयुक्तियुक्तो न भवति तर्हि स गृह्यते । अन्यमतानुसारेण यदि अयमाचार उपयुक्ततत्त्वविशिष्टोये न भवेत् तर्हि धर्माधिकरणं तं परित्यक्तुं नार्हति । यदा धर्माधिकरणमवगच्छेत् यत् अयमाचारो न प्रयोज्यः तदा अयं युक्तिहीन इति अवगम्यते ।

केचन लेखंकाः लोकनीतिमाचाराभ्यन्तरे स्वीकुर्वन्ति । ते कथयन्ति यत् आचारः कदापि लोकनीतिविरोधी न स्यात् । युक्तियुक्तता अत्यन्तं व्यापिनी परिभाष्या । सा लोकनीतिमन्तर्भावयति ।

**८. परिणियमस्य समर्थनम् -**

एक आचारः यदि वैधः स्यात् तर्हि परिणियमस्य परिपूरको भवेत् । अयमेको नियमो यत् वैधानिकव्यवस्थाया आचारः सर्वदा निलम्बितुं शक्यते ।

ऐतिहासिकसंप्रदायानुसारमाचारः परिणिंयममतिक्रामति किन्तु कुत्रापि अयं प्रयोगो नास्ति । आंलोविधौ अयं विद्यते यत् आचारः न ग्राह्यो भवेत् यदि साधारणविधेः मूलनीतिमयं विरुणद्धि

अन्ततोगत्वा इदं फलति यत्

(क) उपर्युक्तविवरणेन इदं ज्ञायते यत् आचारः यदिवा उपयुक्तलक्षणविशिष्टः, तथापि एतं परिवर्तयितुं धर्माधिकरणस्य प्रभूतक्षमता वर्तते ।

(ख) यदि अस्य विरोधे कोऽपि प्रश्नो न उत्तिष्ठेत् तर्हि अयं विधितुल्यो भवेत् ।

(ग) यदि अयमाचारः प्रतिष्ठितोऽपि कुत्सिताभिसन्धि मूलकःतर्हि तथापि अस्य परिवर्तनाय धर्माधिकरणस्य सर्वाधिकारो वर्तते ।



## दशमोऽध्यायः

# सामाजिकचारस्य वैधानिकस्वीकृतिः

१. पर्यायक्रमेणअनेकाः बहिर्भारतीयशक्तिः एकस्याःपरमेका अस्माकं देशे स्वस्य शासनं प्रतिष्ठापयामास । तासु केवलमाङ्ला एव अस्माकं मौलिकमर्यादाविषये जिज्ञासां प्रकटय्य कतिपययुक्तियुपक्तथमवलम्बितवती इत्युक्तेः अत्युक्ति र्नास्ति । अस्माकं देशस्य विधिर्विधानं चिन्ता चेतना च द्वैतस्थितौ न प्रतिष्ठिते स्तः । आपाततः ते एकां निर्दिष्टां परिनिष्ठितां भित्तिं चोपजीव्य प्रतिष्ठिते । तस्मात् एते परस्परं भिन्ने इति नैव ग्रहीतुं शक्यते । अस्माकं देशस्य विधानं धर्मेण सह चिन्ता च दर्शनेन सह संबद्धा । चिन्ताया अभिलक्ष्यं यत् विधानस्य अभिलक्ष्यं तदेव भवति । विधानस्य वैज्ञानिकविश्लेषणं चिन्तामाध्यमेन क्रियते, पक्षान्तरे चिन्तायाः प्रायोगिकता विधानेनैव साधिता । अस्माकं देशे धर्मस्य पृष्ठपोषकं दर्शनम् । दर्शनस्य च प्रायोगिकं स्वरूपं धर्मः । सुतरां परस्परमुभे अङ्गाङ्गिभूते । विधाने चिन्तायाः प्रायोगिकतासम्पादनात् धर्मेण सह विधानस्य सहजातः सम्पर्कः स्पष्ट इति अनुमीयते । किन्तु संप्रति गोष्ठिभित्तिकैकदेशादर्शस्य धर्मस्य संज्ञारूपेण ग्रहणात् अत्र व्यवहृतो धर्मो भारतीयादर्शस्य दृष्ट्या पुरुषार्थत्वेन अवगम्यते । अस्यांस्थितौ विधानमेव धर्मः । विधानाच्च धर्मो न निकासयितुं शक्यते । अत्र धर्म एकं कर्त्तव्यबोधं जनयति । अन्यत्र च विधानम् अधिकारबोधं जनयति । आङ्गलै र्यदा अस्माकं विधानस्य परिशीलनं प्रारब्धं तदा तैः अस्माकं चिन्तायाः मूलस्तरपर्यन्तं गमनमापतितम् । इत्थं च अस्माकं विधेः विधानस्य च मूलस्रोतो निष्कासयितुं गत्वा परिशेषे वेदधर्मशास्त्राणि आलोड्यापि समस्यासमाधानाय पूर्णतया समर्थास्ते न जाताः । अन्यदेशापेक्षया अस्माकं देशस्य विधेः विधानस्य च मूलस्रोतोभावेन पारम्परिकाचारस्य प्रामाणिकता समधिकेति तैरलक्ष्य । अतएव पारंम्परिकाचारस्तरस्य अनुध्यानेऽकृते समस्ता आचाराः कृतसंस्काराः इति कथनं न केवलं दोषावहमपितु एतत् कथनमेकं सामाजिकं वैषम्यं सृजेत् इति ।

२. अस्यां प्ररिप्रेक्षायां विधिविज्ञानस्य आश्रयो गृह्यते । अष्टिनसालमण्डयोः विधिविज्ञानानुसारेण आचारस्य वैधानिकप्रामाणिकताविषये एतन्मात्रं कथयितुं शक्यते यत् यदि कश्चन आचारो विधानेन अङ्गीकृतः तर्हि तस्य विधिरूपेण

परिणतये मार्गः सरलः, अस्मिन् विषये अस्माकं देशस्य विचारपद्धतिरपि प्रणिधानयोग्या । भारतीयविधानस्य प्रवक्ता मनुः एवं च विधानस्य दार्शनिको जौमिनिः । जैमिनेःमतेन यदि कश्चन आचारो वेदस्य धर्मशास्त्रस्य वा विरोधाचरणमकृत्वा समाजस्य हितं साधयति तर्हि तस्य समाजे विधानरूपेण ग्रहणार्थं काऽपि बाधा नास्ति । आङ्गलविधिविज्ञानानुसारं विचारे क्रियमाणो यस्य कस्यचन आचारस्य विधानीकरणायअष्टौलक्षणानि अपेक्ष्यन्ते यथा :- (१) प्राचीनता, (२) निरवच्छिन्नता, (३) शान्तिपूर्णोपयोगिता, (४) अवश्यकार्यकारिता, (५) निर्दिष्टता, (६) औचित्यबोधः, (७) युक्तियुक्तता, (८) परिणियमस्य समर्थनं च ।

उपयुक्तानि सप्तलक्षणानि विना आचारः समाजे कुसंस्कारः इति मन्यते ।

३. एतानि अष्टौलक्षणानि भारतीयाचार क्षेत्रे कथं प्रयुज्यन्ते इति विचार्यते । आङ्गलविधौ रिचार्डराजत्वस्य प्रथमवर्ष पूर्ववर्तिकालात् आचारः प्रतिष्ठितः आसीत् । तस्य विधिगतप्रामाणिकता अस्ति । एतस्य परवर्तिसमयात् आरभ्य कस्यचन आचारस्य उपलब्धत्वे तस्य विधानगतप्रामाणिकता नैव अर्जिता स्यात् । अनया दृष्टया मनुष्यस्य स्मरणयोग्यसमयः भवति ८०० वर्षात्मकः । अस्यां स्थितौ ८०० वर्षावधिकः प्राचीनाचार एव सर्वथा प्रमाणयोग्यः । परन्तु भारतवर्षे अनेन प्रकारेण परम्परायां सत्यामपि तस्याः किंचित् भिन्नलक्षणं लक्ष्यते । मनुमतानुसारं कस्यचन आचारस्य विधानगतंस्वीकृतिनिमित्तं स्मरणातीतप्राचीनता आवश्यकी । वाहांदूरनिहालकाउर (१८, लाहोर ५९४, पृ. ६१.२) व्यवहारनिर्णये आंलविधेः ११८९ पूर्ववर्त्याचारसंबन्धीय-प्रामाणिकताप्रसङ्गो भारतवर्षे प्रवर्तयितुं न शक्यते इति प्रदर्शितम्, मनोः खीष्टपूर्वसमयस्य विधानविशारदत्वेऽपि तस्य युक्तिः समयोपयोगिनी प्रगतिशीलेति मन्यते, मनुष्यस्य स्मरणयोग्यकालः स्मार्तकालः । मनुमतानुसारं तत्परवर्तिनो नारदधर्मशास्त्रकारस्य मतानुसारं च स्मार्तकालस्य परिमाणं एकशतवर्षात्मकम् । अतएव एकशतवर्षात्मकप्राचीनपरम्परा यदि सालमण्ड प्रतिपादितसप्तविधलक्षणसम्पन्ना स्यात् तर्हि सा प्रामाणिकी स्यात् । अमुं स्मरणयोग्यकालं पुरतः स्थापयित्वा भारतवर्षस्य विधिकर्तारःऋषयः पितृसंपतौ क्रमानुसारेण पुत्रपौत्रप्रपौत्राणां स्वत्वमुत्पद्यत इति मतं पोषयामासुः । परन्तु प्रपौत्रपुत्रस्य स्वत्वं नोत्पद्यते । यतोहि प्रपौत्रपुत्रस्य उत्पत्तिकाले सम्पत्तेः मूलस्वामी

जीवितो न तिष्ठेत्। तदानींमनुष्यस्य आयुरवसितं भवेत्। अतएव पुत्रपौत्रप्रपौत्रा एव सम्पत्तेः युगपत् अधिकारिणो भवन्ति इति युक्तिः प्रदर्श्यते । वृद्धगार्ग्यस्य मतानुसारं पुत्रेण लोकान् जयति, पोत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् इति । पुत्रेण मनुष्योइहलोकं-परलोकं च जयति । पौत्रेण अनन्तलोकान् अश्नुते प्रपौत्रेण सूर्यमण्डलपर्यन्तमभिजयति। परन्तु पौत्रस्य पुत्रविषये कुत्रापि न किमपि कथितम्। सुतरां स्मार्तकालस्य परिमाणरूपेण एकशतवर्षं लक्षीकृत्य प्रत्येकस्य आचारमार्गो नियन्त्रितो वर्तते ।

४. एतादृशं सिद्धान्तमुपजीव्य एकादशशताब्दीयवङ्गीयपण्डितजीमूतवाहनेन स्वकीयमतं प्रदर्श्य कथितं यत् मूलधनस्वामिने यो निकटतमः सम्बन्धी पिण्डं दद्यात् स मूलधनस्वामिनः संपत्तिं प्राप्नुयात् (दद्यात् पिण्डं हरेद्धनम्) । पार्वणविधानेन एकोद्दिष्टविधानेन च पिण्डःप्रदीयते । त्रिपुरुषोद्येशेन पार्वणश्राद्धं क्रियते । त्रयाणां पुरुषाणां संपत्तिप्राप्तये पिण्डदातुरधिकारःस्पष्ट । यथा :- रामचन्द्रः तस्य पितुःउद्येशेन पिण्डप्रदानसमये तेन सह पितामहत्वेन अजाय प्रपितामहत्वेन रघवे पिण्डं प्रयच्छेत्। इयं पार्वणश्राद्धस्य प्रक्रिया । अनेन कारणेन रघुमारभ्य दशरथपर्यन्तानां त्रयाणां पुरुषाणां संपत्तिप्राप्तये रामचन्द्रस्य अधिकारो वर्तते । सुतरां रघोः संम्पत्तौ पुत्रदृष्ट्या अजस्य, पौत्रदृष्ट्या दशरथस्य प्रपौत्रदृष्ट्या च रामचन्द्रस्य अधिकारो वर्तते । अयम् एकः स्मरणयोग्यकालः अथवा स्मार्तकालः । आचारस्य विधानगतस्वीकृतिप्रदिपादननिमित्तं मनुमारभ्य मध्ययुगीयधर्मशास्त्रनिबन्धकाराणामत्र वैमत्यं नैव उपलभ्यते ।

५. नारदस्य चिन्ताधारा अस्यां स्थितौ कतिपयस्थलेषु प्रगतिशीला । तस्य मतेन कश्चन आचारोनिरविछिन्नतया कस्यापि क्षतिमघटयित्वा यदि पालितः भवति इति लक्ष्यते तर्हि तस्य प्रामाणिकता वेदवत् । तस्मिन् क्षेत्रे आचारस्य विधानगतस्वीकृतिः अनस्वीकार्या । ब्लाकष्टोनमहाभागः निरवछिन्नता दृष्ट्या सालमण्डमहाभागस्य शान्तिपूर्णपरिपालनदृष्ट्या आचारस्य प्रमाणिकतापंक्षं समर्थयतः । नारदमतं तयोर्मतं संबदति । अतएव यत्र यत्र यस्य-यस्य मतं परस्परविरोधं न कृत्वा युगोपयोगि तत् सर्वादौ गृहीत्वा आचारस्य विधानगत-स्वीकृत्यै पदक्षेपः नेतव्यः । विधित्वेन परिणतये विधानेन अङ्गीकृतिलाभात् पूर्वामाचारस्य अष्टविधलक्षणविषये पर्यालोचना नितरामावश्यकी ।





09828292645

# दिग्दर्शिनी

## नियमावली

क) लेखकाः कर्गजपत्रस्य एकस्मिन् पार्श्वे लेखान् लिखित्वा प्रेषयेयुः ।

ख) कवितायाः आयामः एकापार्श्वात्मकः स्यात् ।

ग) पाठकानां समालोचनावर्जितं संक्षिप्तं मतं प्रकाश्यते ।

घ) आजीवनशुल्कम् - Rs. 500/-

ङ) पृष्ठपोषकताशुल्कम् - Rs. 1000/-

सम्पर्कसङ्केतः
आचार्यः डक्टरव्रजकिशोरस्वाईं
सम्पादकः, दिग्दर्शिनी
श्रीजगन्नाथसंस्कृतविश्वविद्यालयः, श्रीविहारः, पुरी, दूरभाषः - (06752) - 251155

Printed Book - Post

To
Pandit Laxmidhar Dwivedy
Mumukshu Bhawan
ASI
Varanasi-5

Edited, Printed & Published by Prof. B. K. Swain on Behalf of Utkal Sanskrit Research Society, Puri, Regd - 34194/79